# सागरिका



ऊनविंश-वर्षे तृतीयोऽङ्कः

२०३७ विक्रम-संवत्सरे

प्रकाशकः

सागरिका समितिः, गौरनगर

सागर (म० प्र०)

# सागरिका

## ऊनविंश-वर्षे तृतीयोऽङ्कः



सम्पादकाः

डा० रामजी उपाध्यायः (प्रधानः)
डा० राधावल्लभ त्रिपाठी
डा० रेवाप्रसाद द्विवेदी
डा० रामगोपाल मिश्रा

व्यवस्था-कार्यालयः

सागरिका-समितिः,
गौरनगर
सागर (म० प्र०)।

सम्पादन-कार्यालयः

भारतीय-संस्कृति-संस्थानम्
नारीबारी
इलाहाबाद।

प्रकाशकः
डॉ० राधावल्लभ त्रिपाठी
अध्यक्षः
सागरिका-समितिः
गौरनगर, सागर।

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४.०० रूप्यकाणि |
| वार्षिकम् | १५.०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००.०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः Cloth Bound Vols. | ५००.०० रूप्यकाणि |
| आजीवन-ग्राहकाणां कृते सर्वेऽङ्काः | २००.०० रूप्यकाणि |
| वर्षे १-५ प्रत्यङ्कम् | ७.०० रूप्यकाणि |
| वर्षे ६-१० ,, | ६.०० रूप्यकाणि |
| वर्षे ११-१५ ,, | ५.०० रूप्यकाणि |
| वर्षे १६-१९ ,, | ४.०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन पौष-चैत्र [जून-सितम्बर-दिसम्बर-मार्च] मासेषु |

मुद्रक :
राजेश प्रिंटिंग वर्क्स,
त्रिलोचनघाट, वाराणसी।




# विषयानुक्रमणिका

प्रकाशक
डॉ० र
अध्यक्षः
सागरिक
गौरनगर,

प्रत्यङ्कम्
वार्षिकम्
आजीवनग्राह
प्राचीनाः सर्वे
(
आजीवन-ग्राह
वर्षे १-५
वर्षे ६-१०
वर्षे ११-१५
वर्षे १६-१९
अङ्कप्रकाशः

मुद्रकः
राजेश प्रिंटिंग
त्रिलोचनघाट, व

# १. नाट्य-समारम्भः

अहो माहात्म्यं नाटय-जगतः, यत्र रङ्कोऽपि पात्रीभूय नृपायते, शिला-शकलमपि रङ्गे स्थितं गिरिराजायते, वर्त्तमानेऽद्यदिवसेऽपि त्रेताद्वापर-युगोचितं रामकृष्णादीनां चरितं प्रत्यक्षायते च। तत्र विमुग्धा इव प्रेक्षका वस्तुतोऽसत्यमपि कार्यंजातं साधु बुद्ध्या सोत्साहमूरीकुर्वन्ति। ते स्वाभाविकात्मवृत्तेर्विधुरा इव नाटयवृत्तपरायणा भवन्ति। तेषां प्रेक्षकाणामात्मविस्मृतबुद्ध्या नटाभिनये समाधिं समाजयितुं नाटय-समारम्भस्य प्रथमपदे पूर्वमेव रञ्जनात्मकः कार्यक्रमो विधीयते। स चासौ कार्यक्रमः पूर्वरङ्गः।[1] भरतानुसारेण—

> यस्माद् रङ्गे प्रयोगोऽयं पूर्वमेव प्रयुज्यते।
> तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमा॥
>
> ना. शा. ५.७

## पूर्वरङ्गः

> सर्वदैवतपूजार्हं सर्वदैवतपूजनम्।
> धन्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम्॥ २.५५

नाटयाभिनये पूर्वः (आरम्भिकः) रंग (प्रयोगः) पूर्वरङ्गः। गीततालवाद्यनृत्तपाठ्यं समस्त-व्यस्ततया प्रयुज्यमानं यन्नाटयाङ्गभूतं स पूर्वरङ्गः।[2]

---

१. पूर्वरङ्गस्य भावप्रकाशन उद्धृता परिभाषा सम्यग् युज्यते

> सभापतिः सभा सभ्या गायका वादका अपि
> नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात्।
> अतो रङ्ग इति ज्ञेयः पूर्वं यत् स प्रकल्प्यते
> तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते॥

अभिनवगुप्तानुसारेण 'रङ्गे नाटयप्रयोगोऽयं पूर्वो भागः। ना. शा. ४.१४ अधिकृत्याभिनवभारती शुभङ्करानुसारेण 'पूर्वरङ्गः सभापूजा' इति।

२. ना. शा. ५.७ अधिकृत्य भारती

पूर्वरङ्गस्योनविंशति प्रायाङ्गानि भवन्ति ।[1] प्रयोगविज्ञानदृष्टचा महत्त्वपूर्णानि कतिपयाङ्गानि अधोविधानि सन्ति ।

प्रथमस्तावत्पूर्वरङ्गभेदः प्रत्याहारः । प्रत्याहारेण भाण्ड-विन्यासो विधीयते । पश्चादवतरणाख्येन पूर्वरंगभेदेन रंगपीठे गायिकानां निवेशनं क्रियते। आरम्भनामके पूर्वरंगभेदे गीतारम्भ आलापेन भवति । पश्चाद् विविधवाद्यानां स्वरसामञ्जस्यं विधीयते । एतैर्भेदैः पूर्वरङ्गे संगीतस्य पूर्वसज्जा सम्पाद्यते। पश्चात् गीतनामके पूर्वरंगविधौ देवतानां कीर्तनं भवति ।

## नान्दी

पूर्वरङ्गभेदेषु नान्दी श्रेष्ठा वर्तते । नान्द्याः पादान्तरेषु बहुतरं नृत्तं प्रवर्तते ।[2] इयं नान्दी अभिनयेनापि शोभते ।[3] अस्या माहात्म्यं भारतीवृत्तौ विलसति । नान्दी एव भारतीवृत्तेः प्ररोचना भवतीति सङ्केतयत्यभिनवगुप्तः—

"जयाभ्युदयिनी चैव मंगल्या" ना. शा. २०.२७

## रङ्गद्वारम्

रङ्गद्वारादेवाभिनयः प्रारभ्यते । तथा हि भरतः—

यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥

अत्र प्रेक्षकाणां नाटचाभिनयात् प्रागेवानुरञ्जनं प्रस्तूयते ।

## त्रिगतम्

त्रयः पुरुषाः सूत्रधारः, पारिपार्श्वकः, विदूषकश्च भविष्यन्नाटकादि-विषयं संवदन्ति । अत्र विदूषकः कथानिकां प्रस्तौति । कथानिका असम्बद्धकथाप्रायापि प्रेक्षकानुरञ्जनविधायिनी भवति ।

---

१. अङ्गानां न्यूनाधिकभावे हि भूयांसः पूर्वरंगभेदाः । शारदातनयानुसारेण द्वाविंशत्यङ्गानि सन्ति पूर्वरङ्गस्य

२. ना. शा. ५.१५८ अधिकृत्य भारती

३. 'या सृष्टिः स्रष्टुराद्या' इति नान्दीविषयेऽभिनवगुप्तः प्रोक्तवान्—तत्रैक एव जलहुताशनाभिनयः उत्तमेन प्रयोज्येः । ना. शा. ९.१७३ अधिकृत्य

## प्ररोचना

अभिनवगुप्तानुसारेण 'प्ररोचना प्रकृष्टरुचिहेतुभूतत्वात्' यथा नाम विलसति। तत्र

उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥

यन्मयान्यत्रापि विश्लिष्टं सूत्रधार एव पूर्वरङ्गभेदानां प्रणेता, निर्देष्टा, अभिनेता च पुराभवत्। पूर्वरङ्गविधौ तस्य काव्येनाभिनयेन च परं प्रमुदिताः प्रेक्षका आत्मविस्मृता इव नाट्याभिनयस्य रसास्वादने तत्परा भवन्ति।

## २. लोकधर्मी नाट्यधर्मी च

स्वभावो लोकधर्मी तु विभावो नाट्यमेव हि ॥ २१.२०३

अभिनयो द्विविधो भवति—लोकधर्मी, नाटचधर्मी च। यथा लोके तथा रंगपीठे यदि पात्रमनुकरोति तर्हि लोकधर्मी नाटचं भवति। एतदेव व्याख्याति भरतः—

स्वभावभावोपगतं शुद्धं त्वविकृतं तथा।
लोकवार्ता-क्रियापेतमङ्गलीलाविवर्जितम् ॥
ना. शा. १३.७१

स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम्।
यदीदृशं भवेन्नाटयं लोकधर्मी तु सा स्मृता ॥ १३.७२

अभिनवगुप्तानुसारेण—लोको नाम जनपदवासी जनः, जनपदश्च देश एव। लोकवार्ता लोकप्रसिद्धिः तस्यां या क्रिया व्यवहारो वृत्तान्तस्तया शुद्धमेव कृत्वा यन्नाटयं नटनीयं कार्यं सा लोकधर्मी। अङ्गलीलया वर्त्तमानादिकया वर्जितं कृत्वा। अभिनवगुप्तो लोकधर्मीनाटचं पुनरपि स्पष्टीकरोति—यदा कविर्यथावृत्तं वस्तुमात्रं वर्णयति, नटश्च प्रयुङ्क्ते, न तु स्वबुद्धिकृतं रञ्जना-वैचित्र्यं तत्रानुप्रवेशयन्, तदा तावान् स काव्यभागः प्रयोगभागश्च लोक-धर्माश्रयः। अतोऽत्र धर्मी।

नाटच धर्मी लक्षयति भरतः—

अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम्।
लीलाङ्गहाराभिनयं नाटयलक्षणलक्षितम् ॥ १३.७२

स्वरालङ्कारसंयुक्तमस्वस्थ-पुरुषाश्रयम्।
लोकप्रसिद्धं द्रव्यं तु यदा नाटये प्रयुज्यते।
मूर्तिमत् साभिलाषं च नाटचधर्मी तु सा स्मृता ॥ १३.७४

आसन्नोक्तं तु यद्वाक्यं न श्रृण्वन्ति परस्परम्।
अनुक्तं श्रूयते वाक्यं नाटयधर्मी तु सा स्मृता ॥ १३.७५

शैलयान-विमानानि चर्मवर्मायुधध्वजाः।
मूर्तिमन्तः प्रयुज्यन्ते नाटयधर्मी तु सा स्मृता ॥ १३.७६

ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः ।
नृत्यते गम्यते चापि नाट्यधर्मी तु सा स्मृता ॥ १३.८०
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः ।
सोऽङ्गाभिनय-संयुक्तो नाट्यधर्मी तु सा स्मृता । १३.८१
यश्चेतिहासवेदार्थो ब्रह्मणा समुदाहृतः ।
दिव्यमानुषरत्यर्थं नाट्यधर्मी तु सा स्मृता ॥ १३.८२
यश्च कक्ष्याविभागोऽयं नानाविधिसमाश्रितः ।
रंगपीठगतः प्रोक्तः नाट्यधर्मी तु सा स्मृता ॥ १३.८३
सर्वस्य सहजो भावः सर्वो ह्यभिनयोऽर्थतः ।
अङ्गालङ्कारचेष्टाभिर्नाट्यधर्मी प्रकीर्तिता ॥ १३.८५

अभिनवगुप्तः प्रागेव नाटचधर्मीं व्याचष्टे–नटसमयमात्ररूपा नाटचधर्मी ।[1] अर्थात् यन्न लोके विद्यते, केवलं रंगपीठे नटैः प्रयुज्यते सा नाटचधर्मी । स नाटच-धर्मीं स्पष्टीकरोति । तद्यथा,

१. इतिहासादिवाक्यमतिक्रम्य या उचितरञ्जकेतिवृत्तकल्पनात्मिका क्रिया । यथा राजशेखरेण रामनिर्वासनार्थं दशरथवेषराक्षस-विरचित-तत्त्वकल्पना । अत्र प्रख्याते वृत्ते उत्पाद्यं वृत्तं मिश्रयते ।

२. अतिसत्त्वातिभावकम्—भावस्वभावयोर्विपरीतमाचरणमेव । यथा राज्ञ्यो संस्कृत-भाषणम् ।

३. लीलाङ्गहाराभिनयम्--मनोहरा ये अङ्गहारा तत्प्रधानैरभिनयैरुपेतम् ।

४. स्वरालंकारसंयुक्तम्–स्पष्टम् ।

५. अस्वस्थ-पुरुषाश्रयम्—यत्र च पुरुषो न स्वरूपे तिष्ठति । अपि तु स्त्री-बलमाश्रयति । पुरुषभूमिकायां स्त्री प्रवर्तते ।

६. लोकेऽपि कलाशिल्पिकल्पनाकलितमतस्तदपि मूर्तिसम्पादनेन प्रयोग क्रियते । यथा मायापुष्पके–ततः प्रविशति ब्रह्मशापः । अत्र शापस्य मूर्तीकरणं नाटचधर्मी ।

७. जनान्तिकापवारितकयोः नाटचधर्मीत्वं स्पष्टमेव । न तादृशं क्वचिल्लोके भवति । तथैवाकाशभाषितं नाटचधर्मी भवति, यत्र पात्रमनुक्तं शृणोति । लोके इत्थं न सम्भवति ।

---

१. ना. शा. ९.१ अधिकृत्य भारती ।

८. आहार्याणि सन्ति रंगपीठे शैलयानविमानानि, चर्मवर्मायुधध्वजाः। नैतानि वास्तविकानि रंगे स्थितिमर्हन्ति। अत एव मूर्तिरूपेण प्रस्तूयन्ते। एषा प्रक्रिया नाट्यधर्मी। अत्रास्त्रादीनि दारुवस्त्रचित्रादिरूपाणि प्रयुज्यन्ते।

९. अस्वाभाविकविधिनाङ्गहारादिसमाश्रयेण कलात्मकसौष्ठवप्रदर्शनाय प्रायशो नटोऽभिनयति। तत्र नाट्यधर्मी आपद्यते।

यत्किञ्चिद् रङ्गपीठेऽभिनीयते, तत्सर्वं स्वल्पांशतो लोकधर्मी भवति, अधिकांशतश्च नाट्यधर्मी एवेति पूर्वोक्त-विवेचनेन स्पष्टम्। नाट्यधर्मी तु अभिनेयार्थस्य प्राणाः।

नाट्यधर्मो नाटकस्य सर्वेष्वङ्गेषु सम्भवति। कथावस्तुनि यत्परिवर्तनं विधीयते तत्र प्रकरणवक्रतेति नाट्यधर्मः। पात्राणां विपरीतभूमिकाग्रहणे, अननुरूपाचरणे नाट्यधर्मः। अन्यत्र विश्लेषितं छायातत्त्वं नाट्यधर्मं सविशेषं महत्त्वपूर्णस्थानं भजते। आरभटीवृत्तेः संक्षिप्तिः संक्षिप्तको वा नाट्यधर्मं द्योतयति।[1]

स्वभाविककार्यव्यापारेऽङ्गहारादीनां, गीतातोद्यानां, सन्ध्यङ्गानां नाट्यालङ्काराणां, वीथ्यङ्गानां च प्रयोगो विरल-विरलो भवति किन्तु नाट्याभिनये एतेषां निकामप्रयोगैः प्रेक्षणकाणामनुरञ्जनं नितरामभिमतमेव। किं बहुना, स्थाने स्थाने पद्यपाठो भृशं विलसति नाट्येषु। आत्मगतम्, एकोक्तिः, प्रतिक्रियोक्तिः आकाश-भाषितं, आकाशवाणी जनान्तिकमपवारितकञ्चेति सर्वं नाट्यधर्मः।

वैदेशिक-नाट्यप्रयोगे लोकधर्मीत्वं ( Realism ) प्रधानम्। भारते पुनः नाट्यधर्मीत्वं नाट्याभिनये चरमोत्कर्षं प्रापितम्।

---

१. अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः।
संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको नाम॥ ना. शा. २०.६८

## ३. अङ्गाभिनयः

चतुर्विधाभिनयेष्वाङ्गिकः प्रथमं स्थानमर्हति। आङ्गिकोऽभिनयस्त्रिविधो भवति-शारीरः, मुखजः चेष्टाकृतश्च। शारीरस्तु पुनः षड्विधो शरीराङ्गानुसारेण। शरीराङ्गानि तु शिरः, हस्तः, कटी, वक्षः, पार्श्वः, पादश्च। शिरसोऽपि षडङ्गानि सन्ति—नेत्रं, भ्रूः, नासा, अधरः, कपोलः, चिबुकम्।

### शिरः कर्माणि

अभिनये शिरसः कर्माणि त्रयोदश सन्ति। तेषां प्रयोगाभिज्ञानं क्रमशोऽधोविषयानुसारेण भवति—

| | |
|---|---|
| आकम्पितम्— | संज्ञा, अपदेशः, पृच्छा, स्वभावभाषणम्, निर्देशः। |
| कम्पितम्— | रोषः, वितर्कः, विज्ञानम्, प्रतिज्ञातम्, तर्जनम्, व्याधिः, अमर्षणम्। |
| धुतम्— | अनिष्टम्, विषादः, विस्मयः, प्रत्ययः, पार्श्वालोकनम्, शून्यम्, प्रतिषेधः। |
| विधुतम्— | शीतग्रस्तम्, भयार्तम्, त्रासितम्, ज्वरितम्। |
| परिवाहितम्— | साधनम्, विस्मयः, हर्षः, स्मितम्, अमर्षितम्, विचारः, विहृतम्, लीला। |
| आधूतम्— | गर्वः, इच्छा, दर्शनम्, पार्श्वालोकनम्, ऊर्ध्वालोकनम्। |
| अवधूतम्— | सन्देशः, आवाहनम्, आलापः, संज्ञा। |
| अञ्चितम्— | व्याधिः, मूर्च्छा, मदः, चिन्ता, दुःखम्। |
| निहञ्चितम्— | गर्वः, विलासः, ललितम्, बिब्बोकः, किलकिञ्चितम्, मोट्टायितम्, कुट्टमितम्, स्तम्भः। |
| परावृत्तम्— | मुखापहरणम्, पृष्ठतः प्रेक्षणम्। |
| उत्क्षिप्तम्— | प्रांशुदिव्यास्त्रयोगः। |
| अधोगतम्— | लज्जा, प्रणामः, दुःखम्। |
| लोलितम्— | मूर्च्छा, व्याधिः, मदः, आवेग, ग्रहः, निद्रा। |

## दृष्टिकर्माणि

तत्र अष्ट रसदृष्टयः, अष्ट स्थायिभावदृष्टयः, विंशतिः संचारिभावदृष्टयः सन्ति।[1] तासां विधानमधोविधं भरतेन वर्णितं क्रमशः—

| रसाश्रिताः अष्ट | रसव्यापारः |
|---|---|
| कान्ता | शृङ्गाररसे |
| भयानका | भयानकरसे |
| हास्या | हास्यरसे |
| करुणा | करुणरसे |
| अद्भुता | अद्भुतरसे |
| रौद्री | रौद्ररसे |
| वीरा | वीररसे |
| बीभत्सा | बीभत्सरसे |

| स्थायिभावाश्रितादृष्टयः अष्ट | भावाः |
|---|---|
| स्निग्धा | रतौ |
| हृष्टा | हासे |
| दीना | शोके |
| क्रुद्धा | क्रोधे |
| दृप्ता | उत्साहे |
| भयान्विता | भये |
| जुगुप्सिता | जुगुप्सायाम् |
| विस्मिता | विस्मये |

### संचारिभावाश्रितादृष्टयः विंशतिः

संचारिभावाश्रिताः दृष्टयः विंशतिः सन्ति—शून्या, मलिना, श्रान्ता, लज्जान्विता, म्लाना, शङ्किता, विषण्णा, मुकुला, कुञ्चिता, अभितप्ता, जिह्मा, ललिता, वितर्किता, अर्धमुकुला, विभ्रान्ता, विप्लुता, आकेकरा, विकोशा, त्रस्ता, मदिरा च।

---

१. रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः।
शृणुत व्यभिचारिण्यः संचारिषु यथा हि ताः॥

| | |
|---|---|
| शून्या | चिन्ता, स्तम्भः । |
| मलिना | निर्वेदः, वैवर्ण्यम् । |
| श्रान्ता | श्रमार्तिः, स्वेदः । |
| लज्जिता | लज्जा |
| ग्लाना | अपस्मारः, व्याधिः, ग्लानिः । |
| शङ्किता | शङ्का |
| विषादिनी | विषादः |
| मुकुला | निद्रा, स्वप्नः, सुखम् । |
| कुञ्चिता | असूया, अनिष्टम्, दुष्प्रेक्षा, अक्षिव्यथा । |
| अभितप्ता | निर्वेदः, अभिघातः, अभितापः । |
| जिह्मा | असूया, जडता, आलस्यम् । |
| ललिता | धृतिः, हर्षः । |
| वितर्किता | तर्कः |
| अर्धमुकुला | आह्लादः, गन्धाघ्राणः । |
| विभ्रान्ता | आवेगः, सम्भ्रमः, विभ्रमः । |
| विप्लुता | चापलम्, उन्मादः, दुःखार्तिः, मरणम् । |
| आकेकरा | दुरालोकः, विच्छेदः, प्रेक्षितम् । |
| विकोशा | मतिः, विबोधः, अमर्षः, गर्वः, औग्र्यम् । |
| त्रस्ता | त्रासः |
| मदिरा | मदः |

## ताराकर्माणि

| | |
|---|---|
| भ्रमणम्, वलनम्, समुद्वृत्तम् | वीररौद्रयोः । |
| निष्क्रमणम्, वलनम् | भयानके । |
| सम्प्रवेशनम् | हास्य-बीभत्सयोः । |
| पातनम् | करुणे । |
| निष्क्रामणम् | अद्भुते । |
| प्राकृतम् | शेषेषु रसेषु । |
| विवर्तनम् | शृङ्गारे |

## तारकापुटकर्माणि

| | |
|---|---|
| निमेषः, उन्मेषः | क्रोधे |
| प्रसृतम् | विस्मये, हर्षे, वीर्ये । |

| | |
|---|---|
| कुञ्चितम् | अनिष्टदर्शनम् । |
| समम् | शृङ्गारे |
| स्फुरितम् | ईर्ष्यासु |
| पिहितम् | सुषुप्ति-मूर्च्छा-वातोष्ण-धूम-वर्षाञ्जनार्तिषु |
| विताडितम् | अभिघाते |

भ्रूकर्माणि

| | |
|---|---|
| उत्क्षेपः (एकाभ्रूः) | कोपे, वितर्के, हेलायां, लीलादौ, श्रवणे, दर्शने । |
| उत्क्षेपः (द्वयोः भ्रुवोः) | विस्मये, हर्षे, रोषे । |
| पातनम् | आसूयित-जुगुप्सायाम्, हास्ये घ्राणे । |
| भ्रूकुटी | दीप्तेषु क्रोधस्थानेषु । |
| चतुरम् | शृङ्गारे, ललिते, सौम्ये, सुखे, स्पर्शे, प्रबोधने । |
| विकुञ्चितम् | स्त्रीपुरुष-संलापे, मोट्टायिते, कुट्टमिते, विलासे, किलकिंचिते । |
| रेचितम् | नृत्ते |
| स्वाभाविकम् | अनाविद्ध-(साधारण-)भावेषु । |

## नासाकर्माणि

षड्विधा नासिका भवति—नता, मन्दा, विकृष्टा, सोच्छ्वासा, विधूर्णिता, स्वाभाविकी च ।

| | |
|---|---|
| नता | विच्छिन्नमन्दरुदिते, नारीणामनुरोधने निःश्वासे । |
| मन्दा | शोके, निर्वेदे, औत्सुक्ये, चिन्तायाम् । |
| विकृष्टा | तीव्रगन्धे, ऊर्ध्वश्वासे, रोषभयार्तिषु । |
| सोच्छ्वासा | मधुरे गन्धे, दीर्घोच्छ्वासे । |
| विकूणिता | हास्येषु, जुगुप्सायाम्, असूयिते । |
| स्वाभाविकी | शेषेषु भावेषु । |

## गण्डकर्माणि

षड्विधं गण्डं भवति—क्षामम्, फुल्लम्, पूर्णम्, कम्पितम्, कुञ्चितम्, समम् च ।

तत्र विनियोगः—

| | |
|---|---|
| क्षामम् | दुःखेषु |
| फुल्लम् | प्रहर्षे |
| पूर्णम् | उत्साहगर्वेषु |
| कम्पितम् | रोषहर्षेषु |
| कुञ्चितम् | रोमाञ्चे, शीते, भये, ज्वरे। |
| प्राकृतम् | शेषभावेषु |

## अधरकर्माणि

षड्विधमधरकर्म भवति—विवर्तनम्, कम्पनम्, विसर्गः, विनिगूहनम्, सन्दष्टकम्, समुद्गकञ्च।

तत्र विनियोगः—

| | |
|---|---|
| विवर्तनम् | असूया-वेदनावज्ञा-हास्यादिषु। |
| कम्पनम् | शीतज्वररोषजपादिषु। |
| विसर्गः (स्त्रीणामेव) | विलासे, बिब्बोके, रञ्जने च। |
| विनिगूहनम् | आयासे |
| सन्दष्टम् | क्रोधकर्मसु |
| समुद्गः | अनुकम्पायाम्, चुम्बने, अभिनन्दने च। |

## चिबुककर्माणि

सप्तविधं चिबुककर्म भवति—कुट्टनम्, खण्डनम्, छिन्नम्, चुक्षितम्, लेहितम्, समम्, दष्टं च।

तत्र विनियोगः—

| | |
|---|---|
| कुट्टनम् | भय-शीत-ज्वर-क्रोधग्रस्तानाम्। |
| खण्डनम् | जपाध्ययन-संल्लापभक्ष्ययोगे। |
| छिन्नम् | व्याधौ, भये, शीते, व्यायामे, रुषितेक्षिते। |
| चुक्षितम् | जृम्भणे |
| लेहनम् | लेह्ये |
| समम् | स्वभावभावेषु |
| सन्दष्टम् | क्रोधकर्मसु |

## आस्यकर्माणि

षड्विधमास्यकर्म भवति—विनिवृत्तम्, विधुतम्, निर्भुग्नम्, भुग्नम्, विवृतम्, उद्वाहि ।

तत्र विनियोगः—

| | |
|---|---|
| विनिवृत्तम् | असूयायाम्, ईर्ष्या-क्रोधावज्ञा-विहृतादिषु। |
| विधुतम् | वारणे |
| निर्भुग्नम् | गम्भीरालोकनादिषु । |
| भुग्नम्[1] | लज्जायाम्, निर्वेदौत्सुक्यचिन्तासु, नये, मन्त्रणे च । |
| विवृतम् | हास्य-शोक-भयादिषु । |
| उद्वाहि | लीलायाम्, गर्वे, अनादरे च । |

## मुखरागः

मुखरागश्चतुर्विधो भवति—स्वाभाविकः, प्रसन्नः, रक्तः, श्यामः ।

तत्र विनियोगः—

स्वाभाविकः—स्वभावाभिनयाश्रयः ।
प्रसन्नः—अद्भुत-हास्य-शृङ्गारेषु ।
रक्तः—करुण-वीर-रौद्र-मदाद्येषु ।
श्यामः—भयानक-बीभत्सयोः ।

भरतो मुखरागस्य सविशेषं महत्त्वं वर्णयति । तद्यथा—

शरीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ॥
द्विगुणां लभते शोभां रात्राविव निशाकरः ।
नयनाभिनयोऽपि स्यान्नानाभावरसस्फुटः ॥
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् ।
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टि-संयुतम् ॥
तथा भावरसोपेतं मुखरागं प्रयोजयेत् ॥

ना. शा. ८.१६६–१६९

---

१. भुग्नं नामास्यकर्म यतीनां स्वभावजं भवति ।

## ग्रीवाकर्माणि

ग्रीवाकर्म नवविधं भवति—समा, नता, उन्नता, त्र्यस्रा, रेचिता, कुञ्चिता, अञ्चिता, वलिता, विवृत्ता च।

एतासां विनियोगः—

| | |
|---|---|
| समा | ध्यान-स्वभाव-जपकर्मसु। |
| नता | अलङ्कार-बन्धे, कण्ठावलम्बने। |
| उन्नता | ऊर्ध्वनिवेशने। |
| त्र्यस्रा | स्कन्धभारेऽतिदुःखिते। |
| रेचिता | मथननृत्तयोर्हावे च। |
| कुञ्चिता | धारिते, गलरक्षणे च। |
| अञ्चिता | उद्बन्धने, केश-कर्षोच्चदर्शने च। |
| वलिता | वीक्षणे |
| विवृत्ता | स्वस्थानाभिमुखादिषु। |

भरतानुसारेण

ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि हि ॥ ८.१७७ ॥

पूर्वोक्ताभिनयकर्मसु शिरसोऽङ्गत्वं नेत्र-भ्रू-नासोष्ठ-कपोलादीनामुपाङ्गत्वं प्रसिद्धम्।

## हस्तकर्माणि

अभिनये हस्तस्य त्रिविधा स्थितिर्भवति—असंयुक्तहस्तः, संयुक्तहस्तः, नृत्तहस्तश्च। एतेषां सप्तषष्टि कर्माणि अधोविधानि सन्ति—

### असंयुक्तहस्तस्य चतुर्विंशति कर्माणि—

पताकः, त्रिपताकः, कर्तरीमुखः, अर्धचन्द्रः, अरालः, शुकतुण्डः, मुष्टिः, शिखरः, कपित्थः, खटकामुखः, सूच्यास्यः, पद्मकोशः, सर्पशीर्षकः, मृगशीर्षः, काङ्गुलः, अलपद्मः, चतुरः, भ्रमरः, हंसास्यः, हंसपक्षः, सन्दंशः, मुकुलः, ऊर्णनाभः, ताम्रचूडश्च।

### संयुतहस्तस्य त्रयोदशकर्माणि—

अञ्जलिः, कपोतः, कर्कटः, स्वस्तिकः, खटकावर्धमानकः, उत्सङ्गः, निषधः, दोलः, पुष्पपुटः, मकरः, गजदन्तः, अवहित्थः, वर्धमानश्च।

## नृत्तहस्तस्य त्रिंशत् कर्माणि—

चतुरश्रौ, उद्वृत्तौ, तलमुखौ, स्वस्तिकौ, विप्रकीर्णौ, अरालखटकामुखौ, आविद्धवक्रौ, सूच्यास्यौ, रेचितौ, अर्धरेचितौ, उत्तानवञ्चितौ, पल्लवौ, नितम्बौ, केशबन्धौ, लताख्यौ, करिहस्तौ, पक्षवञ्चितकौ, पक्षप्रद्योतकौ, गरुडपक्षौ, दण्डपक्षौ, ऊर्ध्वमण्डलिनौ, पार्श्वमण्डलिनौ, उरोमण्डलिनौ, उरःपार्श्वार्धमण्डलौ. मुष्टिकस्वस्तिकौ, नलिनीपद्मकोशकौ, अलपल्लवोल्बणौ, ललितौ, वलितौ च ।

एतेषां प्रत्येकशोऽभिनेया भावाः, रसाः, पदार्थाश्च सन्ति । दिङ्मात्रेण प्रमुखाणि कर्माणि तेषामभिनेयाश्च भावादयः प्रदर्श्यन्ते ।

## असंयुतहस्तस्य नाट्यप्रयोजकानि कर्माणि—

पताकः, पताकेन अग्निः, वर्षा, पुष्पवृष्टिः, पल्वलम, पुष्पोपहारः, शष्पाणि, वायुवेगः, ऊर्मिवेगः, वेला-क्षोभः, ओघः, शैलधारणम्, शैलोत्पाटनम् ।

### त्रिपताकः

त्रिपताकेन अवतरणम्, प्रवेशः, प्रणामः, पक्षिणामुत्पतनम्, नृपदर्शनम्, तपस्विदर्शनम्, संग्रामः, मकरः, वानरप्लवनम्, बालेन्दुदर्शनञ्च ।

### कर्तरीमुखः

कर्तरीमुखेन पतनं मरणञ्च ।

### अर्धचन्द्रः

अर्धचन्द्रेण बालतरवः, शशिलेखा, कम्बकलशवलयानि च ।

### अरालः

अरालेन जनसमूहश्च ।

### मुष्टिः

मुष्टिना असियष्टीनां कुन्तदण्डादीनां ग्रहणं व्यज्यते ।

### शिखरः

शिखरेण धनुर्धारणमभिनीयते तोमरशक्ति प्रमोक्षणञ्च ।

**कपित्थः**

कपित्थहस्तेन असि-चाप-चक्र-तोमर-कुन्त-गदा-शक्ति-वज्रादीनि अभिनेयानि ।

**खटकामुखः**

विशिष्टमिदं हस्तकर्म, छत्रं, प्रग्रह-परिकर्षणं, व्यञ्जनकम्, आदर्शधारणं, पुष्पावचयः, प्रतोदकार्यम् इत्यादीनि व्यज्यन्ते ।

भरत आह—

होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं व्यञ्जनकं च ।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥
आयतदण्डग्रहणं मुक्ताप्रालम्बसङ्ग्रहं चैव ।
स्रग्दामपुष्पमालावस्त्रान्तालम्बनं चैव ॥
मन्थनशरावकर्षणपुष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्ज्वाकर्षस्त्रीदर्शनमेव कार्यं च ॥

ना. शा. ९.६१-६३

**सूचीमुखः**

सूचीमुखेन नक्षत्राणि, यष्टिः, दिन-निशावसानानि, शिलावर्तयन्त्रशैलाः, देवाः ( शम्भुः इन्द्रः ) चन्द्रमण्डलं च प्रमुखतोऽभिनीयन्ते ।

**पद्मकोशः**

पद्मकोशेन विकसितकमलोत्पलमभिनेयम् ।

**चतुरः**

चतुरेण बहुविधा भावा अभिनीयन्ते ।

भरत आह—

नयविनयनियमसुनिपुणबालातुरसत्त्वकैतवार्थेषु ।
वाक्ये युक्ते पथ्ये सत्ये प्रशमे च विनियोज्याः ॥ ९-९४
नयनौपम्यं पद्मदलरूपणं हरिणकर्णनिर्देशः ।
लीलां रतिं रुचिं च स्मृतिबुद्धि-विभावनाः क्षमां पुष्टिञ्च ।
संज्ञामाशां प्रणयं विचारणं संगतं शौचम् ॥

चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् ।
प्रश्नं वार्तायुक्तिं वेषं मृगशाद्वलं स्तोकम् ॥
विभवाविभवौ सुरतं गुणागुणौ यौवनं गृहान् दारान् ।
नानावर्णांश्च तथा चतुरेणैवं प्रयुञ्जीत ॥ ९.९४–९९

**भ्रमर:**

भ्रमरेण पद्मोत्पलकुमुदानां पुष्पाणां ग्रहणविधिर्निदर्शनीयः ।

**सन्दंश:**

सन्दंशेन प्रमुखतो योगध्यानादिकमभिनीयते ।

अन्यच्च—

आलेख्य-नेत्ररञ्जन-वितर्क-वृन्त प्रवालरचने च ।
निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः ॥ ९.११६

**मुकुल:**

मुकुलेन हिरण्यगणना, मुकुलितकुसुमानि च विभावनीयानि ।

**ऊर्णनाभ:**

ऊर्णनाभेन सिंहव्याघ्रादयो हिंस्रजन्तवोऽभिव्यज्यन्ते ।

**ताम्रचूड:**

असंख्येयाः स्वर्णमुदास्ताम्रचूडेन व्यज्यन्ते ।

## संयुतहस्तस्य-कर्माणि

**अञ्जलि:**

भरतानुसारेण

देवतानां शिरःस्थस्तु गुरूणामास्य-संस्थितः ।
वक्षस्थश्चैव मित्राणां स्त्रीणां त्वनियतो भवेत् ॥ ९.१२९

**स्वस्तिक:**

स्वस्तिकेन जलधरो, नभः, वनं, समुद्रः, ऋतवः, मही, ओघश्चाभिनीयन्ते ।

निषधः

निषधेनाधोलिखिता भावाः प्रदर्श्यन्ते—

संग्रह-परिग्रहौ धारणं च समयश्च सत्यवचनं च।

मकरः

हिंस्रजन्तवः मकरेणोपलक्षिताः। यथा

सिंहव्यालद्वीपिप्रदर्शनं नक्रमकरमत्स्यानाम्।
ये चान्ये क्रव्यादा अभिनेयास्तेऽर्थयोगेन॥

ना. शा. ९.१५३

गजदन्तः

गजदन्तेन विवाहो, यात्रा भारयोगः, स्तम्भग्रहणं, शैलशिलोत्पाटनं च व्यज्यन्ते।

भरतानुसारेण हस्त-प्रयोगो देशानुसारी कालानुसारी च भवति।

अन्यच्च—

उत्तमानां कराःकार्या ललाटक्षेत्रचारिणः।
वक्षस्थाश्चैव मध्यानामधमानामधोगताः॥ ९.१७२

पूर्वोक्तान् हस्तप्रयोगान् व्यतिरिच्य बहवोऽन्ये हस्तप्रयोगा अपि लोके प्रचलिताः सन्ति। तेषां विषये भरत प्राह—

अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह।
छन्दतस्ते प्रयोक्तव्या रसभावविचेष्टितैः॥ ९.१६३
देशं कालं प्रयोगं चाप्यर्थयुक्तिमवेक्ष्य च।
हस्ता ह्येते प्रयोक्तव्या नृणां स्त्रीणां विशेषतः॥ ९.१६४
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधि।
नेत्रभ्रूमुखरागाद्यैः कर्तव्या व्यञ्जिता बुधैः॥ ९.१७०

## नृत्तहस्ताः

पूर्वोक्तास्त्रिंशत् नृत्तहस्त-प्रयोगाश्चतुष्करणेषु विभक्ताः सन्ति—आवेष्टितानि उद्वेष्टितानि व्यावृतानि परिवर्तितानि च।

## जठरकर्माणि

भरतानुसारेण जठरकर्माणि त्रिधा सन्ति—

क्षामं हास्येऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्वमिष्यते ॥
पूर्णमुच्छ्वसिते स्थूले व्याधितात्यशनादिषु ॥ ९.२४२–२४३

## कटीकर्माणि

कटीकर्माणि षड्विधा सन्ति–छिन्ना, निवृत्ता, रेचिता, कम्पिता, उद्वाहिता। एतासु कम्पिताया विनियोगोऽधोविधो भरतानुसारेण—

कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ॥ ९.२४९

## ऊरुकर्माणि

ऊरुकर्माणि पञ्चधा सन्ति—कम्पनम्, वलनम्, स्तम्भनम्, उद्वर्त्तनम्, विवर्तनं च। एतेषां विनियोगो भरतेन वर्णितः—

गतिष्वधमपात्राणां भये चापि हि कम्पनम् ।
वलनं चैव कर्तव्यं स्त्रीणां स्वैर-परिक्रमे ॥
साध्वसे च विषादे च स्तम्भनं सम्प्रयोजयेत् ।
व्यायामे ताण्डवे चैव कार्यमुद्वर्त्तनं बुधैः ॥
विवर्त्तनं च कर्तव्यं सम्भ्रमादि-परिक्रमे ॥ ९.२५४–२५६

तत्रान्यान्यपि कर्माणि सम्भवेयुः येषां प्रयोगा लोकाद् ग्राह्याः[1] ।

## जङ्घा-कर्माणि

जंघाकर्माणि पञ्चधा भवन्ति—आवर्तितम्, नतम्, क्षिप्तम्, उद्वाहितम्, परिवृत्तं च। एतेषां विनियोगो भरतानुसारेण—

आवर्तितं प्रयोक्तव्यं विदूषक-परिक्रमे ।
क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते ॥
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ।

## पादकर्माणि

पादकर्माणि पञ्चधा विवृतानि—उद्घट्टितः, समः, अग्रतलसञ्चरः, अञ्चितः, कुञ्चितश्च। एतेषु कुञ्चितपादस्य विनियोगो भरतदिशावधेयः—

उदात्तगमने चैव वर्तितोद्वर्तिते तथा ।
अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ॥ ९.२७८–२७९

---

१. यथादर्शनमन्यच्च लोकाद् ग्राह्यं प्रयोक्तृभिः । ना. शा. ९.२५६

अन्यच्च पाद-जङ्घोरुकरणानां परस्परं सामञ्जस्यं भरतेन निर्दिष्टम्। तथा हि—

यथा पादः प्रवर्तेत तथैवोरुः प्रवर्तते।
तयोः समानकरणात् पादचारीं प्रयोजयेत् ॥

## चारी

नाट्यशास्त्रानुसारेण चारी नाम एकपाद प्रचारः। द्विपादक्रमणं तु करणमित्यभिधीयते, करणानां समूहैः खण्डं, खण्डानां समूहै मण्डलं जायते[1]।

नाट्ये चारी सविशेषं विलसति। भरतानुसारेण—

यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संज्ञितम्।
न हि चार्या विना किञ्चिन्नाट्येऽङ्गं संप्रवर्तते ॥ १०.६

चारी-प्रयोगो नृत्ते युद्धे गतौ च महत्त्वपूर्णम्।[2] अन्यच्च—शृङ्गारस्य प्रचरणाच्चारी, रौद्रप्रचरणाच्चापि महाचारी—

चारी द्विधा भवति—भौमीचारी आकाशिकी चारी च। तत्र भौमीचारी षोडशधा विभज्यते—समपादा, स्थितावर्ता, शकटास्या, अध्यर्धिका, चाषगति, विच्यवा, एडकाक्रीडिता, बद्धा, ऊरूद्वृत्ता, अड्डिता, उत्स्पन्दिता, जनिता, स्यन्दिता, अपस्यन्दिता, समोत्सरितमत्तल्ली, मत्तल्ली च।

आकाशिकी चारी षोडशधा विभज्यते—अतिक्रान्ता, अपक्रान्ता, पार्श्वक्रान्ता, ऊर्ध्वजानु, सूची, नूपुरपादिका, डोलपादा, आक्षिप्ता, आविद्धा, उद्वृत्ता, विद्युद्भ्रान्ता, अलाता, भुजङ्गत्रासिता, हरिणप्लुता, दण्डपादो, भ्रमरी च।

एतासां चारीणां स्वरूपं लक्षणं च नाट्यशास्त्रे सम्यग् वर्णितम्।[3]

---

१. एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥
करणानां समायोगात् खण्डमित्यभिधीयते।
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥
ना. शा. १०.३,४

२. ना. शा. १०,७। चारीभिःशस्त्रमोक्षश्च। १०.४
ना. शा. १०.१३–४५

३. ना. शा. ५.२७

चारीणां विनियोगो भरतेनाधोविधं वर्णयति—

धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे ॥
अग्रगौ पृष्ठगौ वापि ह्यनुगौ वापि योगतः ।
पादयोस्तु द्विजा हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं कृत्वा तथोपाङ्गानि योजयेत् ॥
पादचार्यां यथा पादो धरणीमेव गच्छति ।
एवं हस्तश्चरित्वा तु कटीदेशं समाश्रयेत् ॥
एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ॥

ना. शा. १०.४६–५०

## चारीणां स्थानानि

चार्याः पश्चाद्यदवस्थानं भवति तदेव स्थानकमिति ख्यातम्। एतेषां प्रयोगः शास्त्रविमोक्षणे भवति[1]। स्थानानि षट् सन्ति–वैष्णवं, समपादं, वैशाखं, मण्डलं, प्रत्यालीढम्, आलीढं च।

तत्र वैष्णवं स्थानम्—

द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत्।[2]
तयोः समस्थितस्त्वेकः त्र्यस्रः पक्षस्थितोऽपरः ॥
किञ्चिदञ्चितजंघं च सौष्ठवाङ्गपुरस्कृतम् ।
वैष्णवं स्थानमेतद्धि विष्णुरत्राधिदैवतम् ॥

ना. शा. १०. ५२. ५३

वैष्णवस्थानकेन स्वाभाविकः संवादः, पूर्वरङ्गे सूत्रधारस्य वचनम् च विनियुज्येते। 'तालमात्रान्तरस्थितौ समौ पादौ' इति समपादे विप्राणामाशीर्वचनं गृह्यते।

अन्यच्च—

१. ना. शा. १०.५०

२. तालस्तु ८ इञ्च परिमितो भवति। 'तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते' इति विश्वमेदिन्यौ।

रूपणं पक्षिणां चैव वरं कौतुकमेव च।
खस्थानां स्यन्दनस्थानां विमानस्थायिनामपि॥

अर्थात् पक्षिभूमिकायां पात्रं वैष्णवस्थानकं गृह्णाति। आकाशे रथे विमाने च स्थिताः जनाः समपादा भवन्ति।

वैशाखस्थानकेन अश्ववाहनं, व्यायामः, स्थलपक्षिभूमिका, धनुष्कर्षणं च सम्पाद्यन्ते।

मण्डलस्थानकेन धनुर्वज्रशस्त्रधारणं क्रियते, हस्त्यारोहणं गरुडादीनां महापक्षिणां च भूमिकाभिनीयते।

आलीढस्थानकेन वीररौद्ररसनिष्पादकं कर्म प्रयुज्यते।

अन्यच्च विनियोज्यं तत्र—

मल्लानां चैव सम्फेटः शत्रूणां च निरूपणम्।
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम्॥

प्रत्यालीढेन स्थानकेन नानाशास्त्रविमोक्षो विनियुज्यते। वृत्त्यनुसारेण चतुर्धा शास्त्रविमोक्षविधिः—भारतः, सात्वतः, वार्षगण्यः, कैशिकश्च। तेषां विनियोगः भारतेन कटिच्छेद्यं, सात्वतेन पादच्छेद्यं, वार्षगण्येन वक्षः-प्रहारः, कैशिकेन शिरश्छेदनं च प्रदर्शनीयानि।

## खण्ड-मण्डलयोः प्रयोगः

भरतानुसारेण पूर्वोक्तानि खण्डमण्डलानि द्विपादचारीणां संयोगेन निष्पाद्यन्ते। तेषां विनियोगोऽधोविधो वर्तते—

एतानि खण्डानि समण्डलानि युद्धे नियुद्धे च परिक्रमे च।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानितज्ज्ञैः॥
ना. शा. ११.७०

## गति–प्रचारः

बहुविस्तरोऽयं विषय इति सम्प्रधार्य भरतेन प्रोक्तम्—

नोक्ता या या मया ह्यत्र ग्राह्यास्तास्ताश्च लोकतः॥
नोक्तश्च यः सोऽर्थवशेन साध्यः १२.२३५ १२.१५९

अभिनवगुप्तानुसारेण गतिः प्रकृतिं (कथापुरुषं), रसमवस्थां देशं कालं चापेक्ष्य वक्तव्या। प्रकरणेऽस्मिन् गतिर्मुख्यतः पद्भ्यां गमनमेव द्योतयति,

किन्तु प्रसङ्गतः पात्रस्य सहायं वेषभूषादिकमासनं देहसन्निवेशं चानुदर्शयति। तथा हि प्रच्छन्नकामिते गतिः कीदृशी भवेदिति भरतमुखेन द्रष्टव्यम्।

## रसानुसारेण गतिः

प्रच्छन्नकामिते चैव गतिं भूयो निबोधत।
विसर्जितजनः स्रस्तस्तथा दूतीसहायवान्॥
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः।
वेलासदृशवस्त्रश्च सहदूत्या शनैस्तथा॥
व्रजेत् प्रच्छन्नकामस्तु पादैर्निश्शब्दमन्दगैः।
शब्दशक्त्युत्सुकश्च स्यादवलोकन - तत्परः॥
वेपमानशरीरश्च शङ्कितः प्रस्खलन् मुहुः।

ना. शा. १२.४५–४८

इयं शृङ्गाररसपरागतिः।

## वीरस्य गतिः

अथ वीरे तु कर्तव्या पादविक्षेपसंयुता।
द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला॥
पार्श्वक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च।
कक्षाकालगतैः पादैरावेगे योजयेद् गतिम्॥

ना. शा. १२.५७, ५८

## शान्तस्य गतिः

वणिजां सचिवानां च गतिः कार्या स्वभावजा।
कृत्वा नाभितटे हस्तमुत्तानखटकामुखम्॥
आद्यं चारालमुत्तानं कुर्यात् पार्श्वं स्तनान्तरे।
न निषण्णं न च स्तब्धं न चापि परिवाहितम्॥
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः॥
यतीनां श्रमणानां च ये चान्ये तपसि स्थिताः।
तेषां कार्या गतिर्यैं तु नैष्ठिकं व्रतमाश्रिताः॥

अलोलचक्षुश्च भवेद्युगमात्र - निरीक्षणः ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ॥
अचंचलमनाश्चैव यथावल्लिङ्गमाश्रितः ।
विनीतवेषश्च भवेत् कषायवसनस्तथा ॥
प्रथमं समपादेन स्थित्वा स्थानेन वै बुधः ।
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत् ॥
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगः ।
अनिषण्णेन गात्रेण गतिं गच्छेद् व्यतिक्रमात् ।
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ॥

ना. शा. १२.७६–८४

## देशानुसारेण गतिः

### रथगतिः

रथाधिष्ठितजनस्य गतिः चूर्णपदैः, समपादस्थानकेन च दर्शनीया। तत्र सूतो धनुः कूबरं च गृहीत्वा प्रतोदप्रग्रहधरोऽश्वादिचित्रेण सह दर्शनीयः। सूतश्चूर्णपदैः रंगे गच्छति ।

एवमेव विमानाकाशजलगमनादिकं च प्रदर्शनीयम्। केन विधिना यानारोहणं यानादवतरणं च दर्शनीये इति भरतः स्पष्टयति—

आरोढुमुद्वहेद् गात्रं किञ्चित् स्यादुन्मुखस्थितम् ।
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ॥ १२.९२
अधोऽवलोकनैश्चैव मण्डलावर्तनेन च ।
आकाशगमने चैव कर्त्तव्या नाट्ययोक्तृभिः ॥ १२.९३

### व्योमादवतरणम्

स्थानेन समपादेन तथा चूर्णपदैरपि ।
व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद् गतिम् ॥
ऋज्वायतोन्नतनतैः कुटिलावर्तितैरथ ।
भ्रश्यतश्च तथाकाशादपविद्धभुजा गतिः ॥
विकीर्णवसना चैव तथा भूगतलोचना ।

ना. शा. १२.९३–९५

## प्रासादारोहणे गतिः

प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ।
उद्वाह्य गात्रं पादं च न्यसेत सोपानपंक्तिषु ॥
तथावतरणं चैव गात्रमस्यैव कारयेत् ।
प्रासादे यन्मया प्रोक्तः प्रतारः केवलो भवेत् ॥ १२.९८

## नौस्थगतिः

नौस्थस्यापि प्रयोक्तव्या द्रुतैश्चूर्णपदैर्गतिः॥
ना. शा. १२.१०२

## पर्वतारोहणगतिः

प्रासादारोहणे यत्तु तदेवाद्रिषु कारयेत् ।
केवलं तच्च विक्षेपसंप्रिष्वंगं भवेदथ ॥ १२.१०३

## वृक्षारोहणगतिः

द्रुमे चारोहणं कार्यमतिक्रान्तैः स्थितैः पदैः । १२.१०४

## विटस्य गतिः

विटस्यापि तु कर्तव्या गतिर्ललित-विक्रमा ।
पादैराकुञ्चितैः किञ्चित् तालाभ्यन्तरपातितैः ॥
स्वसौष्ठवसमायुक्तौ तथा हस्तौ पदानुगौ ।
खटकावर्धमानकौ कृत्वा विटगतिं व्रजेत् ॥ १२.११०–११२

## मत्तानां गतिः

मत्तानां तु गतिः कार्या मदे तरुणमध्यमे ।
वामदक्षिणपादाभ्यां घूर्णमानापसर्पणैः ॥
अवकृष्टे मदे चैव ह्यनवस्थितपादिका ।
विघूर्णितशरीरा च करैः प्रस्खलितैस्तथा ॥ १२.१२१–१२२

## उन्मत्तस्य गतिः

उन्मत्तस्यापि कर्तव्या गतिस्त्वनियतक्रमा ।
बहुचारी-समायुक्ता लोकानुकरणाश्रया ॥

रूक्ष-स्फुटितकेशश्च रजोध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवान् ॥
गायत्यस्माद्धसति संगे चापि न सज्जते ।
नृत्यत्यपि च संहृष्टो वादयत्यथवा पुनः ॥
कदाचिद्धावति जवात् कदाचिदवतिष्ठते ।
कदाचिदुपविष्टस्तु शयितः स्यात् कदाचन ॥
नानाचीरधरश्चैव रथ्यास्वनियतालयः ।
उन्मत्तो भवति ह्येवं तस्यैतां कारयेद्गतिम् ॥
स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् ।
बद्धां चारीं तथा चैव कृत्वा स्वस्तिकमेव च ॥
अनेन चारीयोगेन परिभ्रम्य तु मण्डलम् ।
बाह्यभ्रमरकं चैव रङ्गकोणे प्रसारयेत् ॥
त्रिकं सुललितं कृत्वा लताख्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पद्भ्यां सहगतिर्भवेत् ॥

ना. शा. १२.१२३-१३०

## विदूषक-गतिः

विदूषकस्यापि गतिर्हास्यत्रयविभूषिता ।
अङ्गकाव्यकृतं हास्यं हास्य नेपथ्यजं स्मृतम् ॥
दन्तुरः खलतिः कुब्जः खंजश्च विकृताननः ।
यदीदृशः प्रवेशः स्यादङ्गहास्यं तु तद् भवेत् ॥
यदा तु बकवद् गच्छेदुल्लोकितविलोकितैः ।
अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्तु सः ॥
काव्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणैः ।
अनर्थकैर्विकारैश्च तथा चाश्लीलभाषणैः ॥
चीरचर्ममषीभस्मगैरिकाद्यैस्तु मण्डितः ।
यस्तादृशो भवेद् विप्रा हास्यो नेपथ्यजस्तु सः ॥
तस्मात्तु प्रकृतिं ज्ञात्वा भावं कार्यं च तत्त्वतः ।
गति प्रचारं विभजेन्नानावस्थान्तरात्मकम् ॥
स्वभावजायां विन्यस्य कुटिलं वामके करे ।
तथा दक्षिण-हस्ते च कुर्याच्चतुरकं पुनः ॥

पार्श्वमेकं शिरश्चैव हस्तोऽथ चरणस्तथा ।
पर्यायशः संनमयेल्लयतालवशानुगः ॥
स्वभावजा तु तस्यैषा गतिरन्या विकारजा ।
अलाभलाभाद् भुक्तस्य स्तब्धा तस्य गतिर्भवेत् ॥

ना. शा. १२.१३७–१४६

## पक्षि-श्वापद-पशूनां गतयः

सिंहस्य, ऋक्षस्य, वानरस्य वा गतिः कीदृशी भवेदिति भरतो-प्रपञ्चयति—

या कृता नरसिंहेन विष्णुना प्रभविष्णुना ।
आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ॥
जानूपरि करं ह्येकमपरं वक्षसि स्थितम् ।
अवलोक्य दिशः कृत्वा चिबुकं बाहुमस्तके ॥
गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः ।
नियुद्ध-समये चैव रंगावतरणे तथा ॥

ना. शा. १२.१५४–१५६

अत्र मनुष्यः स्वयमेव सिंहीभूय रङ्गेऽवतरति ।

## पात्राणां विपर्यय-गतिः

अभिनवगुप्तानुसारेण कस्यचित् कार्यस्य साधनाय पुरुषः स्त्रीभावेन स्त्री वा पुरुषभावेन रंगे प्रविशति । यथा विदूषकस्य सङ्केतस्थाने चेटिकावस्त्र-धारणम् इति व्याजसमुत्थो विपर्ययः । अन्यत्र क्रीडासमुत्थो विपर्ययो जायेत । तत्र इष्टजनस्याकृतौ नायिका रङ्गेऽवतरति । वञ्चनासमुत्थे विपर्यये किमपि पात्रं वंचयितुमपरं पात्रं विपरीतं पुरुषभावं स्त्रीभावं वा धारयति । यथा विदूषकं वंचयितुं चेटकस्य स्त्रीवेषकरणम् ।

भरतानुसारेण—

स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि च ।
धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ॥ १२.१९७
स्त्रीपुमांसं त्वभिनयेद् वेषवाक्यविचेष्टितैः । १२.१९८
मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ॥ १२.१९९

## आसन-विधिः

पात्राणि केन विधिनासनं गृह्णीयुरित्यस्मिन् प्रकरणे विविक्तम्। आसनं तु स्त्रीपुरुषविचारेण, मनःस्थितिं सम्प्रधार्य प्रयोजनं चोद्दिश्य निर्धारणीयम्। तथा हि भरतः स्वस्थानां विषये—

नानाभावसमायुक्तस्तथा च शयनाश्रयः।
विष्कम्भिताञ्चितौ पादौ त्रिकं किञ्चित् समुन्नतम्॥
हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने।
ना. शा. १२.२०३–२०४

### सचिन्तानामासनम्

पादः प्रसारितः किञ्चिदेकश्चैवासनाश्रयः॥
शिरः पार्श्वनतं चैव सचिन्त उपवेशने।
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः॥ १२.२०४–२०५

### धार्मिकविधिषु आसनम्

पित्र्ये निवापे जप्ये च सन्ध्यास्वाचमनेऽपि च।
विष्कम्भितं पुनश्चैव जानुं भूमौ निपातयेत्॥ १२.२०९
प्रियाप्रसादने कार्यं होमादिकरणेषु च।
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम्॥ १२.२१०

### देवादीनामासनम्

देवानां नृपतीनां च दद्यात् सिंहासनं द्विजाः।
पुरोधसाममात्यानां सवेत्रासनं तथा॥
मुण्डासनञ्च दातव्यं सेनानी-युवराजयोः।
काष्ठासनं द्विजादीनां कुमाराणां कुथासनम्॥ १२.२१५–२१६

तथैव स्त्रीणामप्यासनं विधातव्यम्।

### आसनदूषणम्

नौनागरथयानेषु भूमिकाष्ठासनेषु च।
सहासनं न दुष्येत गुरूपाध्याय-पार्थिवैः॥ १२.२२७

# वाक्याभिनयः

नानारसार्थयुक्तैर्वृत्तनिबन्धैः कृतः स चूर्णपदैः ।
प्राकृत-संस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः ॥ १२.४४

# ४. वाक्याभिनयः

वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनूः स्मृता ।
अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि ॥ १४.२

वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च ।
तस्माद्वाचः परं नास्ति वाग् हि सर्वस्य कारणम् ॥ १४.३

अभिनवगुप्तानुसारेण 'वाचि यत्नस्तु कर्तव्य' इति कविना निर्माणकाले नटेन प्रयोगकाले ।

## पाठ्यगुणाः

तत्र पाठ्यगुणाः पाठ्ये उपकारकाः सन्ति, यदुपकृतं काव्यं पाठ्यं भवति। तत्र पाठ्यगुणाः षट् सन्ति—सप्तस्वराः, त्रीणिस्थानानि, चत्वारो वर्णाः, द्विविधाकाकुः, षडलङ्काराः, षडङ्गानि च ।

### स्वरविधानम्

भरतानुसारेण रसस्य स्वरस्य च सामञ्जस्यमधोविधं भवति—

| | |
|---|---|
| १. मध्यमपञ्चमौ | हास्यश्रृङ्गारयोः |
| २. षड्जर्षभौ | वीर-रौद्राद्भुतेषु |
| ३. गान्धारः, निषादः | करुणे |
| ४. धैवतः | बीभत्से भयानके |

### स्थानविधानम्

| | |
|---|---|
| शिरःस्थानेन | दूरस्थे आभाषणम् |
| कण्ठस्थानेन | नातिदूरे |
| उरःस्थानेन | पार्श्वतः |

अन्यच्च—

उरसोदाहृतं वाक्यं शिरसा दीपयेद् बुधः ।
कण्ठेन शमनं कुर्यात् पाठ्ययोगेषु सर्वदा ॥ १७.१०७

## वर्णविधानम्

उदात्तानुदात्तस्वरितकम्पिताश्चत्वारो वर्णाः—

| | |
|---|---|
| स्वरितोदात्तैर्वर्णैः | हास्यश्रृङ्गारयोः |
| उदात्त-कम्पितैः | वीर-रौद्राद्भुतेषु |

अनुदात्त-स्वरित-कम्पितैः—करुण-बीभत्स-भयानकेषु

## काकुविधानम्

काकुः साकांक्षा, निराकांक्षा च भवति ।

काकुः साकांक्षा अनियुक्तार्थके वाक्ये । तारादिमन्द्रान्तम् अनिर्यातित-वर्णालङ्कारं कण्ठोरःस्थानगतम् ।

काकुः निराकांक्षा नियुक्तार्थके वाक्ये । मन्द्रादितारान्तम्, निर्यातितवर्णालङ्कारम्, शिरःस्थानगतम् ।

हास्यश्रृङ्गार-करुणेष्विष्टा काकुर्विलम्बिता ।
वीररौद्राद्भुतेषूच्चा दीप्तावापि प्रशस्यते ॥
भयानके सबीभत्से द्रुता नीचा च कीर्तिता ।
एवं भावरसोपेता काकुः कार्या प्रयोक्तृभिः ॥ १७.१२८–१२९

## अलङ्कारविधानम्

अलङ्काराः षड्धा-उच्चः, दीप्तः, मन्द्रः, नीचः, द्रुतः, विलम्बितश्च ।

| | | |
|---|---|---|
| १. उच्चः | शिरःस्थानगतः | दूरस्थभाषण - विस्मयोत्तरोत्तर - संजल्प-दूराह्वान-त्रासना बाधाद्येषु । |
| २. दीप्तः | शिरःस्थानगत-स्तारतरः | आक्षेप-कलह - विवादामर्ष - क्रुष्टाधर्षण-क्रोध-शौर्य-दर्प - तीक्ष्ण - रूक्षाभिधान - निर्भर्त्सनाक्रन्दितादिषु । |
| ३. मन्द्रः | उरः स्थानगतः | निर्वेद-ग्लानि-चिन्तौत्सुक्य-दैन्य - व्याधि-क्रीडा-गाढशस्त्रक्षत-मूर्च्छा - मद-गुह्यार्थ-वचनादिषु । |
| ४. नीचः | उरः स्थानस्थः मन्द्रतरः | स्वभावाभाषण-व्याधि-शम-श्रमार्त-त्रस्त-पतित-मूर्छितादिषु । |
| ५. द्रुतः | कण्ठगतः त्वरितः | लल्लन-मन्मन- भयशीत-ज्वर - त्रासाय-स्तात्ययिककार्यविदनादिषु । |

| | | |
|---|---|---|
| ६. विल-म्बित: | कण्ठस्थानगत: तनुमन्द्र: | शृङ्गार-करुण-वितर्कित्-विचारामर्षासूयिताव्यक्तार्थ-प्रवाद-लज्जा-चिन्ता-तर्जन-विस्मय-दोषानुकीर्तन-दीर्घरोग-निपीडनादिषु। |

## अङ्गविधानम्

षड्धाङ्गानि—विच्छेदोऽर्पणं, विसर्गोऽनुबन्धो, दीपनं प्रशमनमिति।[1]

| अङ्गानि | रसा: |
|---|---|
| १. अर्पण—विच्छेद-दीपन-प्रशमनयुक्तपाठचम् | हास्य-शृङ्गारयो: |
| २. दीपन—प्रशमन-युक्तम् | करुणे |
| ३. विच्छेद—प्रशमन-दीपनानुबन्धबहुलम् | वीर-रौद्राद्भुतेषु |
| ४, विसर्ग—विच्छेदयुक्तम् | वीभत्स-भयानकयो: |

## लय-विधानम्

लय: त्रिधा भवति—द्रुत:, मध्य:, विलम्बित:।

| लय: | रसेषुविनियोग: |
|---|---|
| १. द्रुत: | वीर-रौद्राद्भुत-बीभत्स-भयानकेषु |
| २. मध्य: | हास्य-शृङ्गारयो: |
| ३. विलम्बित: | करुणे |

---

१. एतेषु विच्छेदस्तु विराम एव। भरतानुसारेण विरामे प्रयत्नोऽनुष्ठेय:। विरामो ह्यर्थानुदर्शक:। तद्यथा,

विरामेषु प्रयत्नो हि नित्यं कार्य: प्रयोक्तृभि:।
कस्मादभिनयो ह्यस्मिन्नर्थापेक्षी यत: स्मृत:॥
यत्र व्यग्रावुभौ हस्तौ तत्र दृष्टि-समन्वित:।
वाचिकाभिनय: कार्यो विरामैरर्थदर्शकै:॥ ना. शा. १७.१२४

# ५. आहार्याभिनयः

अभिनवगुप्तेन नाट्य-प्रयोग आहार्याभिनयस्य वैशिष्ट्यं वर्णितम्। तद्यथा—

नानाभूता या अवस्था रतिशोकाद्या नानाश्रयभूताश्च याः प्रकृतयो धीरोदात्तादय उत्तमाधमप्रभृतयश्च ताः पूर्वं यत्नतो नेपथ्येन साधिताः प्रकाशिताः पश्चादङ्गादिभिर्विभागमनुभावविषय-विभाग-नामोपपत्ति देशकालविभागं चार्पयद्भिः स्फुटतामानीयन्ते। तेन समस्ताभिनय-प्रयोगचित्रस्य भित्तिस्थानीयमाहार्यम्। तथा च समस्ताभिनयव्युपरमेऽपि नेपथ्यविशेष-दर्शनाद्विशेषोऽवसीयत एव।[1]

भरतानुसारेण 'आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः'। तत्रेदं नेपथ्यं चतुर्धा भवति—पुस्तः, अलङ्कारः, अङ्गरचना, सञ्जीवं च।

## पुस्तः

पुस्तो नाम नेपथ्यं त्रिविधं भवति—सन्धिमः व्याजिमः, वेष्टिमश्च। तत्र सन्धिमः सन्धानं सन्धा तया निर्वृत्तः। व्याजिमः सूत्रस्याकर्षादिरूपः, तेन निर्वृत्तः। वेष्ट्यत इति वेष्टिमः।

## अलङ्कारः

अलङ्कारः त्रिविधो भवति—माल्येन, आभरणेन, वस्त्रेण च। शरीरस्य विविधाङ्गेषु प्रयुक्ता अलङ्कारा अधोनिर्दिष्टाः सन्ति देवानां पार्थिवानाञ्च—

| | |
|---|---|
| शिरसि— | चूडामणिः, मुकुटम्, किरीटम्, मौलिश्च।[2] |
| कर्णे— | कुण्डलं, मोचकं, कीला।[3] |

---

१. नानावस्थाः प्रकृतयः पूर्वं नेपथ्यसाधिताः।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः॥
ना. शा. २१.२ अधिकृत्य भारती।

२. चूडामणिः शिरोमध्ये। मुकुटं ललाटोर्ध्वे।

३. कुण्डलमधरपाल्याम्। मोचकं कर्णशष्कुल्या मध्यच्छिद्रे कृतम्। कीला ऊर्ध्वच्छिद्रे, उत्तरकर्णिकेति प्रसिद्धा।

| | |
|---|---|
| कण्ठे— | मुक्तावली, हर्षकम्, सूत्रकं च।[1] |
| अङ्गुलौ— | वेतिका, अङ्गुलिमुद्रा च।[2] |
| बाहुनाल्याम्— | वलयम्। |
| मणिबन्धे— | रुचकः, चूलिका च।[3] |
| कूर्परोपरि— | केयूरे अङ्गदे।[4] |
| वक्षसि— | त्रिसरः, हारश्च।[5] |
| कटौ— | तलकं, सूत्रकं च।[6] |

अधोविधानि नारीणामाभरणानि सन्ति—शिरसि-शिखापाशम्, शिखाव्यालः, पिण्डीपत्रम्, चूडामणिः, मकरिकाः, मुक्ताजालम्, गवाक्षिकं, शीर्षजालं च।[7]

| | |
|---|---|
| ललाटे— | तिलकम्। |
| भ्रूगुच्छोपरि— | कुसुमानुकृतिः गुच्छः। |
| कर्णे— | कर्णिका, कर्णवलयं, पत्रकर्णिका, कुण्डलं, कर्णमुद्रा, कर्णोत्कीलका, दन्तपत्राणि, कर्णपूरः। |
| गण्डे— | तिलकाः पत्रलेखाश्च |
| वक्षसि— | त्रिवणी, हाराः[8] |
| नेत्रयोः— | अञ्जनम् |
| अधरे— | रञ्जनम्, अश्मरागोद्द्योतितः, पल्लवप्रभः |

१. हर्षकमिति समुद्गकं सर्पादिरूपतया प्रसिद्धम्।
सूत्रकमिति गुच्छग्रीवासूत्रादितया प्रसिद्धम्।
२. वेतिकेति सूक्ष्मकटकरूपा, अङ्गुलिमुद्रा पक्षिपद्माद्याकारेणोपेता।
३. रुचकः करगोलके विततः। ततः ऊर्ध्वे चूलिका।
४. कूर्परस्योर्ध्वतः केयूरे। तयोरूर्ध्वेऽङ्गदे।
५. त्रिसरः मुक्तालतात्रयेण।
६. तलकं नाभेरधः तस्याप्यधः; सूत्रकम्।
७. शिखापाशस्तु चूडापाश एव। शिखाव्याले ग्रन्थिभिरुपनिबद्धो नागो भवति कर्णिका-स्थानीयः। तस्यैव दल-सन्धानतया चित्ररचनानि वर्तुलानि पत्राणि पिण्डी पत्राणि। चूडामणिः शिरोमध्ये ततो मकरिका ततो ललाटान्तमुक्ताजालिका (तोरणम्)।
८. नानाशिल्पकृताश्चैव हारा वक्षोविभूषणम्।

| | |
|---|---|
| दन्तेषु— | विविधाः रागाः, मुक्ताभासितशोभनाः, पद्मपल्लवरञ्जनाः |
| कण्ठे— | रत्नावली, सूत्रकम्, द्विसरः, त्रिसरः, चतुस्सरः, शृङ्खालिका च। |
| बाहुमूले— | अङ्गदं वलयं चैव। |
| स्तने— | मणिजाल विशिष्टो हारः। |
| बाहुनाल्याम्— | खर्जूरकम्, उच्छितिकम्। |
| अङ्गुलौ— | कलापी, कटकम्, शङ्खो, हस्तपत्रं, मुद्राङ्गुलीयकम्, सुपूरकः।[1] |
| श्रोण्याम्— | मुक्ताजालाढचकतलकम्, मेखला, काञ्चिका, रशना, कलापश्च।[2] |
| गुल्फोपरि— | नूपुरः, किंकिणीकः, घण्टिका, रत्नजालकम्, कटके। |
| जंघयोः— | पादपत्रम् |
| अंगुलीषु— | अंगुलीयकम्। |
| पादयोः— | अंगुष्ठ-तिलकाः। |

अन्यच्च पादयोर्भरतानुसारेण चित्रणमलक्तकेन—

तथालक्तकरागश्च नानाभक्तिनिवेशितः।
अशोकपल्लवच्छायः स्यात् स्वाभाविक एव च॥

ना. शा. २१.४१,४२

प्रयोगविज्ञानस्योत्कर्षोऽलङ्कारस्य यथोचितविनिवेशने वर्तते। औचित्यं तत्र भावरसावस्थानुरूप्यमेव प्रवर्तते। तथा हि भरतः—

एतद् विभूषणं नार्या आकेशादानखादपि॥ २१.४२
यथाभावरसावस्थं विज्ञेयं द्विजसत्तमाः।
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा॥ २१.४३

---

१. तलकमिति कवाटद्वय—योजितमिति भारत्यामभिनवगुप्तो ना. शा. २१.३६ अधिकृत्य।

२. भरतानुसारेण—

एकयष्टिर्भवेत्काञ्ची मेखलात्वष्टयष्टिका।
द्विरष्टयष्टी रशना कलापः पञ्चविंशकः॥ इत्यादि

ना. शा. २१.३७,३८

> विश्वकर्ममतात् कार्यं सुबद्ध्यापि प्रयोक्तृभिः ।
> विभागतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ॥ २१.४५
> यत्नभावविनिष्पन्नं मानुषाणां विभूषणम् ॥ ना. शा. २१.५०

एतत्सर्वं मुख्यतः सूत्रधारस्य करणीयमासीत् ।
अन्यच्च सूत्रधार-विचारणाक्षेत्रं वर्तते—

> न तु नाट्यप्रयोगे तु कर्तव्यं भूषणं गुरु ।
> खेदं जनयते तद्धि सव्यायतविचेष्टनात् ॥ ना. शा. २१.४६,४७

सूत्रधारेण विज्ञेयमासीत् प्रयोगविधौ यत् नानादेशानां मनुष्याणां वेषभूषादयः विभिन्नाः सन्ति । तथैव दिव्याङ्गनानां, विद्याधरीणां, यक्षीणाम्, अप्सरोनागयोषिताम्, ऋषिदैवतकन्यानां वैविध्यं वर्तते वेषभूषादिषु ।

## वेषाः

> आकृतिस्तस्य कर्तव्या यस्य प्रकृतिरास्थिता ।। ना. शा. २१.८९

## वर्णः

वेषस्य प्रथमविन्यासो वर्ण एव । वर्णाश्चत्वारः सन्ति-सितो, नीलः, पीतः, रक्तश्च । एतेषां मिश्रणेन संयोगजा उपवर्णा भवन्ति ।

भरतानुसारेण वेषेण वर्णैश्च यथोचितं छादितः पुरुषः परभावं प्रकुरुते । अर्थात् यस्य वेषस्तस्य प्रकृतौ पात्रं प्रविशति । पात्रं तु न केवलं मनुष्यस्य अथवा देवदानव-गन्धर्व-यक्ष-राक्षस-पन्नगानां भूमिकायामेव वेषवर्णादीनां परिवर्तनेन प्रविशति, अपि तु शैल-प्रासाद-यन्त्राणि, चर्मवर्मध्वजाः, नानाप्रहरणाद्या अपि पात्रीभूय मनुष्यरूपेण रंगमवतरन्ति । तथाह भरतः—

> शैल-प्रासादयन्त्राणि चर्मवर्म-ध्वजास्तथा ।
> नानाप्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः ।।
> अथवा कारणोपेता भवन्त्येते शरीरिणः ।। २१.९३–९४

देवादीनां वर्णपरिचयोऽधोलिखिततालिकया भवति—

| योनयः | वर्णाः |
|---|---|
| देवाः, यक्षाः, अप्सरसः | गौराः |
| रुद्रः, अर्कः, स्कन्दः, द्रुहिणः | तपनीय-प्रभाः (स्वर्णवर्णा) |
| सोमः, बृहस्पतिः, शुक्रः, वरुणः, तारकाः, समुद्रः, हिमवान्, गङ्गा | श्वेताः |

| | |
|---|---|
| अङ्गारकः | रक्तः |
| बुधहुताशनौ | पीतौ |
| दैत्याः, दानवाः, राक्षसाः, गुह्यकाः, नगाः, पिशाचाः, जलम्, आकाशः | असितानि |
| षट्सु द्वीपेषु पुरुषाः | निष्टप्तकनक-प्रभाः |
| राजानः | पद्मवर्णाः, गौराः, श्यामाः |
| सुखिनः मर्त्याः | गौराः |
| कुकर्मिणः, ग्रहग्रस्ताः, व्याधिताः तपरिचनः, कुजातयः | असिताः |
| ऋषयः | बदरप्रभाः |
| किराताः, बर्बराः, आन्ध्राः, द्राविडाः, काशिकोशलाः, पुलिन्दाः, दाक्षिणात्याश्च | असिताः |
| शकाः, यवनाः, पह्लवा, बाह्लिका उत्तरदेशवासिनः | गौराः |
| पाञ्चालाः, शौरसेनाः, माहिषाः औड्रमागधाः, अङ्गाः, बङ्गाः, कलिङ्गा | श्यामाः |
| ब्राह्मणाः, क्षत्रियाः | गौराः |
| वैश्याः शूद्राः | श्यामाः |

यस्य भूमिकायां पात्रं प्रवर्तते, तस्य वर्णनात्मानं रञ्जयेत् ।

## श्मश्रुकर्म

भरतानुसारेण—

> श्मश्रुकर्मप्रयुञ्जीत देशकालवयोऽनुगम् । २१.११४

तत्र श्मश्रु चतुर्विधं भवति—शुद्धं, विचित्रं, श्यामं रोमशमेव च। शुद्धं श्मश्रु तु क्षुरितं भवति अदृश्यमेव । विचित्रे श्मश्रुणि क्षुरेण विचित्राः संनिवेशा रचिता भवन्ति ।

वर्णवत् श्मश्रूण्यपि केषां कीदृशानि भवन्त्विति भरतेन विस्तरशः निर्दिष्टम् । तथा हि—

> ऋषीणां तापसानां च ये च दीर्घव्रता नराः ।
> तथा च चीरबद्धानां रोमशं श्मश्रुकीर्तितम् ॥ २१.१२०

## वस्त्रविधानम्

वेषस्त्रिविधो भवति—शुद्धः, विचित्रः, मलिनश्च । भरतो विशेषावसरोचितं विविधलोकानां वेषं निर्धारयति—

देवाभिगमने चैव मंगले नियमस्थिते ।
तिथिनक्षत्रयोगे च विवाहकरणे तथा ॥
धर्मप्रवृत्तं यत्कर्म स्त्रियो वा पुरुषस्य वा ।
वेषस्तेषां भवेच्छुद्धो ये च प्रायत्निका नराः ॥

ना. शा. २१.१२३–१२४

स देव-दानव-यक्ष-गन्धर्वोरग–राक्षस–नृप–ब्राह्मणामात्य-वणिक्काञ्चुकीय-तपस्वि-विप्र-क्षत्रिय-वैश्यादीनां वेषवैशिष्ट्यं वर्णयति ।

कीदृशं वस्त्रं केन धारणीयमिति वर्णयन् भरतः प्राह—

चीरवल्कलचर्माणि तापसानां तु योजयेत् ।
परिव्राण्मुनिशाक्यानां वासः काषायमिष्यते ॥
नानाचित्राणि वासांसि कुर्यात् पाशुपतेष्वथ ॥

ना. शा. २१.१३१–१३२

कार्यान्तरेण वस्त्र-वैशिष्ट्यं जायते । तथा हि—

वेषः साङ्ग्रामिकश्चैव शूराणां सम्प्रकीर्तितः ।
विचित्रशस्त्रकवचो बद्धतूणो धनुर्धरः ॥ २१.१३५

## प्रतिशिरोविधानम्

किमिदं प्रतिशिरो नाम ? अभिनवगुप्तो निर्वक्ति-प्रकृति-रूपं शिरः इति प्रतिशिरः । अर्थात् केवलं शिरसः कपटावरणेन परभाव-ग्रहणं सम्भवेत् । यदि नाम किञ्चित् पात्रं सिंहस्य भूमिकायां रङ्गेऽवतरति, स सिंहस्य प्रतिशीर्षकेण ( प्रतिरूपमुखेन ) आत्मानं दर्शयति । इयं तु साधारणरीतिरासीत् ।

तत्र देवराजादीनां प्रकृतिग्रहणं तु मुकुटादीनां वैविध्येन सम्भवति । बहुविधाः मुकुटा आसन् । केषाञ्चिद् भूमिका अर्धमुकुटेनान्येषाञ्च प्रतिशीर्षेण, लम्बकेशेन, मुण्डितशिरसा, कुञ्चिकेशेन, शिखण्डेन शिखया वा विभावनीया ।

प्रकृतेः सारूप्यार्थं किं किं साधनीयमिति भरतो निर्दिशति—

प्रतिपादं प्रतिशिरः प्रतिहस्तं प्रतित्वचं।
तृणैः किलिञ्जैर्भाण्डैर्वा सारूप्याणि तु कारयेत् ॥
ना. शा. २१.२१०

## मुखस्य प्रतिशिरोविधानम्

भरतानुसारेण—

अथ शीर्षविभागार्थं घटी कार्या प्रयत्नतः।[1]
स्वप्रमाणविनिर्दिष्टा द्वात्रिंशत्यङ्गुलानि वै ॥
ना. शा. २१.१८६

छेद्यं बुधाः प्रकुर्वन्ति विधिदृष्टेन कर्मणा।
अर्धाङ्गुलं ललाटं तु कार्यं छेद्यं षडङ्गुलम् ॥
अर्धार्धमङ्गुलं छेद्यं कक्ष्योर्द्व्यधाङ्गुलं भवेत्।
कटान्ते कर्णनालस्य छेद्यं द्व्यधिकमङ्गुलम् ॥
त्र्यङ्गुलं कर्णविवरं तथा स्याच्छेद्यमेव हि।
ततश्चैवावटुः कार्या सुसमा द्वादशाङ्गुला ॥
घट्यां ह्येतत्सदाच्छेद्ये विधानं विहितं मया ॥
ना. शा. २१.१९०–१९४



१. अत्र घटीस्थाने पदीपाठोऽपि विद्यते।

## ६. सत्त्वाभिनयः

नाट्यं सत्त्वे प्रतिष्ठितम् । ना. शा. २२.१

अभिनवगुप्तानुसारेण रसमयं हि नाटचम् । रसे चान्तरङ्गः सात्त्विकः । तस्मात् स एवाभ्यर्हितः । वागङ्गाभिनययोर्यत्रैकत्रैवाभिनये क्रमेण युगपद्वा प्रयुज्यते, तत्र सात्त्विकस्यान्याद्वयपेक्षयाधिक्यं भवति । तत् प्रशस्यतमाभिनयक्रिया भवति ।

अभिनवगुप्तानुसारेणाभिनयस्तु सत्त्वपरायणः । यतो हि नाम सुष्ठु सम्यगभिमुखीभावं सौष्ठवं नीतो भवति रसपर्यन्तत्वात् प्रीतेरिति । सात्त्विकाभावे ह्यभिनयक्रिया नामापि नोन्मीलति । अभिनयनं हि—चित्तवृत्तिसाधारणतापत्ति-प्राणसाक्षात्कार कल्पाध्यवसाय सम्पादनम्' । अतएवोक्तम्—'सत्त्वे नाटच' प्रतिष्ठितम्' इति ।

सत्त्वं हि विज्ञेयम्—

इह चित्तवृत्तिरेव संवेदनभूमौ सङ्क्रान्ता देहमपि व्याप्नोति ।
सैव च सत्त्वमित्युच्यते ॥

सात्त्विकभावानामधिष्ठानं मन एव । मनसा इन्द्रियार्थाः शब्दादयो गृह्यन्ते । तत्कथमिति भरत आह—

कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वनतं तथा ।
तर्जनीं कर्णदेशे च बुधः शब्दं विनिर्दिशेत् ॥ २२.८२
किंचिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च ।
तथा सगण्डयोः स्पर्शात् स्पर्शमेव विनिर्दिशेत् ॥
कृत्वा पताकौ मूर्धस्थौ किञ्चित् प्रचलिताननः ।
निर्वर्णयन्त्या दृष्टया च रूपं त्वभिनयेद् बुधः ॥
किञ्चिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् ।
एकोच्छ्वासेन चेष्टौ तु रसगन्धौ विनिर्दिशेत् ॥

प्रायश आङ्गिक-वाचिकाहार्यैः व्यामिश्र एव सात्त्विकाभिनयः प्राप्यते । यत्र सत्त्वाभिनयस्योत्तमत्वं तत्रोत्तमं काव्यं भवति, मध्यमे च सत्त्वे, मध्यमं काव्यम् । अथ च सत्त्वाभिनयेऽधमे सति अधमं काव्यं भवेत् । व्यामिश्रत्वेन प्रकरणमिदं सामान्याभिनय संज्ञां धत्ते ।

मनसो भावाः सात्त्विका इति त्रिविधाः सन्ति—इष्टः, अनिष्टः, मध्यस्थश्च। तेषामभिनयोऽधोविधिना सम्पाद्येत्—

इष्टदर्शने

प्रह्लादनेन गात्रस्य तथा पुलकितेन च।
वदनस्य विकासेन कुर्यादिष्टदर्शनम् ॥
इष्टे शब्दे तथा रूपे स्पर्शे गन्धे तथा रसे।
इन्द्रियैर्मनसा प्राप्तैः सौमुख्यं सम्प्रदर्शयेत् ॥

अनिष्टदर्शने

परावृत्तेन शिरसा नेत्रनासाविकर्षणैः।
चक्षुषश्चाप्रदानेन ह्यनिष्टमभिनिर्दिशेत् ॥

मध्यस्थदर्शने

नातिहृष्टेन मनसा न चात्यर्थजुगुप्सया।
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत् ॥

ना. शा. २२.८९-९२

भरतानुसारेण सुखस्य मूलं प्रमदाः। सा त्रिविधा भवति—बाह्या, आभ्यन्तरा, बाह्याभ्यन्तरा च।

सात्त्विकाभिनयैः तासां कामसमुत्पत्तिर्लक्ष्यते। प्रथमं तावन्मदनातुराया वेश्याया लक्षणम्—

ईषत्संरक्तगण्डस्तु सस्वेदलवचित्रितः।
प्रस्पन्दमानरोमाञ्चो मुखरागो भवेदिह ॥ २२.१६३
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः।
तथाभरण-संस्पर्शैः कर्णकण्डूयनैरपि ॥
अङ्गुष्ठाग्रविलिखनैः स्तननाभिप्रदर्शनैः।
नखनिस्तोदनाच्चैव केशसंयमनादपि ॥
वेश्यामेवंविधैर्भावैर्लक्षयेन्मदनातुराम् ॥ २२.१६३-१६६

कुलजायाः कामभावस्य लक्षणम्—

प्रहसन्तीव नेत्राभ्यां प्रततं च निरीक्षते।
स्मयते सा निगूढं च वाचं चाधोमुखी वदेत् ॥

स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहनी ।
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ॥ २२.१६७–१६८

कामस्तु अप्राप्त-सुरतोत्सवाया दशस्थानगतो भवति। तद्यथा—अभिलाषः, चिन्तनं, अनुस्मृतिः, गुणकीर्तनम्, उद्वेगः, विलापः, उन्मादः, व्याधिः, जडता, मरणञ्च। एतेषां सात्त्विकाभिनयोऽधोविधो भवति—

## अभिलाषः

निर्याति विशति च मुहुः करोति चाकारमेव मदनस्य ।
तिष्ठति च दर्शन-पथे प्रथमस्थाने स्थिता कामे ॥ २२.१७४

## चिन्तनम्

आकेकरार्धविप्रेक्षितानि वलयरशनापरामर्शः ।
नीवीनाभ्याः संस्पर्शनं च कार्यं द्वितीये तु ॥ २२.१७६

## अनुस्मृतिः

मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः ।
प्रद्वेषाच्चान्यकार्याणामनुस्मृतिरुदाहृता ॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणिविहस्ता ।
तच्चिन्तोपगतत्वात् तृतीयमेवं प्रयुञ्जीत ॥ २२.१७८

## गुणकीर्तनम्

अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षितैः ।
नास्त्यन्यः सदृशस्तेनेत्येतत् स्याद् गुणकीर्तनम् ॥
गुणकीर्तनोत्ककथनैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्यविरहविस्रम्भैरभिनययोगश्चतुर्थेऽपि ॥ २२.१८०

## उद्वेगः

आसने शयने चापि न तुष्यति न तिष्ठति ।
नित्यमेवोत्सुका च स्यादुद्वेग-स्थानमाश्रिता ॥
चिन्ता-निःश्वास-खेदेन हृद्दाहाभिनयेन च ।
कुर्यात्तदेवमत्यन्तमुद्वेगाभिनयेन च ॥ २२.१८१–१८२

## विलापः

इह स्थित इहासीन इह चोपगतो मया ।
इति तैस्तैर्विलपितैर्विलापं सम्प्रयोजयेत् ॥

उद्विग्नात्यर्थमौत्सुक्याद् धृत्या च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता ॥ २२.१८३–१८४

उन्मादः

तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतापि हि ।
पुंसः प्रद्वेष्टि चाप्यन्यानुन्मादः सम्प्रकीर्तितः ॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥ २२.१८६

व्याधिः

मुह्यति हृदयं क्वापि प्रयाति शिरसश्च वेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत ॥ २२.१८८

जडता

पृष्टा न किंचित् प्रब्रूते न शृणोति न पश्यति ।
हा कष्ट वाक्या तूष्णींका जडतायां गतस्मृतिः ॥ २२.१८९
अकाण्डे दत्त हुङ्कारा तथा प्रशिथिलाङ्गिका ।
श्वासग्रस्तानना चैव जडताभिनये भवेत् ॥ २२.१९०

मरणम्

सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्तायाः जायते मरणं ततः ॥ २२.१९१

अन्यच्च—

चिन्तानिःश्वास-खेदेन हृद्दाहाभिनयेन च ।
तथानुगमनाच्चापि तथैवोर्ध्वनिरीक्षणात् ॥
आकाशवीक्षणाच्चापि तथा दीन-प्रभाषणात् ।
स्पर्शनान्मोटनाच्चापि तथा सापाश्रयाश्रयात् ॥
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत् ॥
ना. शा. २२.१९५–१९७

नायिकानां कामतन्त्रे—

चिन्ता-निःश्वास-खेदेन हृद्दाहाभिनयेन च ।
सखीभिः सह संलापैरात्मावस्थावलोकनैः ॥

ग्लानिर्दैन्याश्रुपातैश्च रोषस्यागमनेन च ।
निर्भूषणमुजात्वेन दुःखेन रुदितेन च ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
तथा प्रोषितकान्ता च भावानेतान् प्रयोजयेत् ॥
ना. शा. २२.२२२–२२४

प्रतीक्षमाण–वासकसज्जायाः सात्त्विकाभिनयः—

श्रुत्वा तु नालिका शब्दं नायकागमविक्लवा ।
विषण्णा वेपमाना च गच्छेत्तोरणमेव च ॥
तोरणं वामहस्तेन कवाटं दक्षिणेन च ।
गृहीत्वा तोरणाश्लिष्टा सम्प्रतीक्षेत नायकम् ॥
शङ्कां चिन्तां भयं चैव प्रकुर्यात्तोरणाश्रिता ।
अदृष्ट्वा रमणं नारी विषण्णा च क्षणं भवेत् ॥
दीर्घं चैव विनिःश्वस्य नयनाम्बु निपातयेत् ।
सन्नं च हृदयं कृत्वा विसृजेदङ्गमासने ॥
व्याक्षेपाद्विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणोपायैः शुभाशुभसमुत्थितैः ॥ २२.२४६–२५०
अनागमे नायकस्य कार्यो गण्डाश्रयः करः ।
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ॥ २२.२५६
सूच्यो नायिकयासन्नो गन्धाघ्राणेन नायकः ॥ २२.२५७
दृष्ट्वा चोत्थाय संहृष्टा प्रत्युद्गच्छेद् यथाविधि ।
ततः कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना ॥ २२.२५८
सखी-स्कन्धार्पितकरा कृत्वा स्थानकमायतम् ।
दर्शयेत ततः कान्तं सचिह्नं सरसव्रणम् ॥ २२.२५९

अभिनवगुप्तानुसारेण—एवमियता वासकसज्जया वागङ्गसत्त्वव्यामिश्रः सामान्याभिनयः प्रियसम्प्राप्त्यवधिर्दर्शितः ।

## मन्युप्रदर्शनम्

वलय-परिवर्तनैरथ सुशिथिलमुत्क्षेपणेन रशनायाः ।
मन्युस्त्वभिनेतव्यः सशंकितं बाष्पपूर्णाक्ष्या ॥ २२.२७४

## अनुनयनेष्वभिनयः

मध्याङ्गुल्यङ्गुष्ठाग्रविस्यवात् पाणिनोरसि कृतेन ।
उद्वर्तितनेत्रतया प्रततैरभिवीक्षणैश्चापि ॥

कटिहस्त-विवर्तनया विच्छिन्नतया तथाञ्जलेः करणात् ।
मूर्धभ्रमणनिहञ्चित - निपात - संश्लेषणाच्चापि ॥
अवहित्थ वीक्षणाद्वा अंगुलि-भङ्गेन तर्जनैर्ललितैः ।
एभिर्भावविशेषैरनुनयनेष्वभिनयः कार्यः ॥ २२.२७७–२७९

## नायिका-प्रसादनम्

गृहीतयाथ केशान्ते हस्ते वस्त्रेऽथवा पुनः ।
हुँ मुञ्चेत्युपसर्पन्त्या वाच्यं स्पर्शालसं प्रियः ॥
पादाग्रस्थितया नार्या किञ्चित् कुट्टमितोत्कटम् ।
अश्वक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः ॥
अमुच्यमाने केशान्ते संजातस्वेदलेशया ।
हुं हु मुञ्चापसर्पेति वाच्यं स्पर्शालसाङ्गया ॥

ना. शा. २२.२८४--२८६

# चित्राभिनयः

चित्राभिनये वाचिकस्य, आङ्गिकस्य, आहार्यस्य मिश्रणं भवति।[1] अभिनयेन साङ्केतिक-व्यञ्जना प्रागेव अङ्गकर्म-स्थान-गति-प्रकरणेषु व्याख्यातम्। अत्र पुनः विभावादीनां प्राथम्येन अभिनयद्वारेण सङ्केतग्रहणं निर्दिश्यते—

| अभिनेय-भावादयः | अभिनय-विधानम् |
|---|---|
| १. प्रभातं, गगनं, रात्रिः, प्रदोषः दिवसः, ऋतुः, घनः, वनान्तः जलाशयः, दिशा, ग्रहः नक्षत्रं च | उत्तानौ करौ स्वस्तिकौ पार्श्वसंस्थितौ, उद्वाहितं, शिरः, ऊर्ध्वनिरीक्षणं च। |
| २. रजः, धूमः, अनिलश्च | वस्त्रेण मुखस्यावगुण्ठनम् |
| ३. मध्याह्न-सूर्यः | ऊर्ध्वाकिकरा दृष्टिः |
| ४. विद्युत्, उल्का, घनरवः, विस्फुलिङ्गः, अर्चिः | त्रस्ताङ्गानि, अक्षिनिमेषाः |
| ५. उष्णो वायुः, तमः, तेजः | मुख-प्रच्छादनम् |
| ६. सिंहः, ऋक्षः, वानरः, व्याघ्रः | निम्नाभिमुखौ स्वस्तिकसंस्थानौ पद्मकोशहस्तौ |
| ७. छत्रं, ध्वजः पताका, | दण्डधारणम् |
| ८. शरत्[2] | सर्वेन्द्रिय-स्वस्थता, प्रसन्नवदनं, भूतलालोकः। |
| ९. हेमन्तः | गात्र-संकोचनम्, सूर्याग्निवस्त्रसेवनं |
| १०. शीतम् | शिरोदन्तोष्ठकम्पः, गात्र-संकोचनं, कूजितं, शीत्कारश्च। |

---

१. अभिनयस्य चित्रत्वं (विचित्रत्वं) विज्ञेयमिति केचित् निर्वचन्ति। तत्र कतिपय नियमा अपि सूचिताः। तथा हि—
भावाभिनयनं कुर्याद्विभावानां निदर्शनैः। २५.४०

२. ऋतूनामभिनयद्योतकोऽयं नियमः—
यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा।
निर्देश्यः स ऋतुस्तेन इष्टानिष्टार्थदर्शनात्॥

| | |
|---|---|
| ११. शिशिरम् | ऋतुपुष्प-गन्ध-घ्राणम् |
| १२. वसन्तः | नानापुष्प-प्रदर्शनम्, प्रमोदात्मकोत्सवः, उपभोगः। |
| १३. ग्रीष्मः | भूमितापः, स्वेदप्रमार्जनम्, वीजनं, उष्णवायु-स्पर्शः। |
| १४. प्रावृट्कालः | कदम्ब-नीप-कुटजपुष्पाणि, शाद्वलं, इन्द्रगोपाः, मेघवातः। |
| १५. वर्षारात्रम् | मेघनादः, धाराप्रपतनं, विद्युन्निर्घातघोषः। |
| हर्षः | गात्राणामालिङ्गनम्, सस्मितं चक्षुकः रोमाञ्चः, आवृतलोचनम्, सस्मितम्। |
| क्रोधः | उद्वृत्तरक्तनेत्रम्, सन्दष्टाधरः, निःश्वासकम्पिताङ्गम्। |
| दुःखम् | निःश्वासोच्छ्वासाः, अधोमुखविचिन्तनम्, भूमिपाताभिघातः |
| भयम् | सन्त्रस्तहृदयम्, पार्श्वावलोकनम्, उच्चैराक्रन्दनम्, प्रियालिंगनम्। |
| मदः | गात्रकम्पनम् |
| शुक-सारिकाः | वलिता त्रिपताकाङ्गुली |
| शिखि-सारस-हंसाः | रेचकाःअङ्गहाराश्च |
| खरोष्ट्रश्वतरसिंहव्याघ्र-गोमहिषादयः | गति-प्रचारः, अङ्गकर्म |
| भूताः, पिशाचाः यक्षाः दानवाः, राक्षसा | अङ्गहाराः |
| देवाः | चिह्नानि, प्रणामकरणानि |
| पर्वतः, वृक्षः | उत्क्षिप्तप्रसारितबाहू |
| सागरः, सेना | उत्क्षिप्त-हस्त-पताके |
| शौर्य-धैर्य-गर्व-दर्पौदार्याणि | ललाटदेशस्थारालः |

## मरणाभिनयः

नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु ।
विक्षिप्तहस्तपादैर्निभृतैः सनैस्तथा कार्यम् ॥

व्याधिप्लुते च मरणं निषण्णगात्रैस्तु संप्रयोक्तव्यम् ।
हिक्काश्वासोपेतं तथा पराधीनगात्रसंचारम् ॥

विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम् ।
विषवेगसम्प्रयुक्तं विस्फुरिताङ्गक्रियोपेतम् ॥

प्रथमे वेगे कार्श्यं त्वभिनेये वेपथुर्द्वितीये तु ।
दाहस्तथा तृतीये विलल्लिका स्याच्चतुर्थे तु ॥

फेनस्तु पञ्चमस्थे तु ग्रीवा षष्ठे तु भज्यते ।
जडता सप्तमे तु स्यान्मरणं त्वष्टमे भवेत् ॥

तत्र प्रथमवेगे तु क्षामवक्त्रकपोलता ।
कृशत्वेऽभिनयः कार्यो वाक्यानामल्पभाषणम् ॥

सर्वाङ्गवेपथुं च कण्डूयनं तथाङ्गानाम् ।
विक्षिप्तहस्तगात्रं दाहं चैवाभिनयेत्तु ॥

उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः ।
अव्यक्ताक्षरकथनैविलल्लिकामभिनयेदेवम् ॥

उद्गारवमनयोगैः शिरसश्च विलोलनैरनेकविधैः ।
फेनस्त्वभिनेतव्यो निःसंगतया निमेषैश्च ॥

अंस-कपोल-स्पर्शः शिरसोऽथ विनामनं शिरोऽपाङ्गः ।
सर्वेन्द्रियसम्मोहाज्जडतामेवं त्वभिनयेत्तु ॥

सम्मीलितनेत्रत्वात् व्याधिविवृद्धौ भुजङ्गदशनाद्वा ।
एवं हि नाट्यधर्मे मरणानि बुधैः प्रयोज्यानि ॥

ना. शा. २५.१००–११०

# छायाट्यम्

छायानाट्ये छायाद्वाराभिनयः स्यादेवेति भ्रान्तिवशादद्यावधि केचिद् दूताङ्गदादीनां छायानाटकत्वं सन्दिहन्ति। छायानाटके कस्यचित् पात्रस्य मायामयी छाया, प्रतिकृतिरिति ( Shadow ) प्रयुज्यते। अतएव छायानाटकं नाम सार्थकं भवति।

किं नाम छायानाटकमित्यस्मिन्विषये विदुषां विप्रतिपत्तिर्दृश्यते। तद्यथा दूताङ्गदादीनि छायानाटकानि सन्ति न वेति प्रश्नं समाधातुं चिरकालादेव विपश्चितां विमर्शो विपथे जागर्ति। एतेषु रूपकेषु छायाभिनयः (Shadow-play ) भवतीति सिद्धान्तितं पिशेल-ल्यूडर्सादिमहाभागैः।[1] डा० डे महोदयः स्पष्टमेवाभिप्रैति 'यद्यपि किन्नाम छायानाटकमित्यतिनिगूढमस्ति, तथापि छायाभिनय ( Shadow play ) सिद्धान्ता नितरां निराधारा एव। नैतेषु किमपि छायाभिनयस्य लक्षणं प्रतीयते' इति।[2]

छायाभिनयो वस्तुतो वैदेशिकी रीतिः। एतस्य प्रमुखं लक्षणमधोनिर्दिष्टम्-

( १ ) श्रोतृशालारङ्गयोर्मध्ये काचित् तिरस्करिणी नीचैरुपरि प्रसार्यते।

( २ ) नाट्यवृत्तिपराणि पात्राणि तिरस्करिण्यास्तले छायाद्वारेण प्रति-

---

१. दूताङ्गदे छायाभिनयो वर्तते इति मतं प्रतिपादयन्ति—

R. Pischel, Das altindische Schattenspiel in SBAW, 1906, pp. 482-502; H. Luders, Die subhikas in SBAW, 1916; p. 698 f; Sten konow, Op, cit, pp 89-90; Winternitz, GIL, III, p. 243 ( also in ZDMG; LXXIV, 1920, p. 118 f )

2. While the connotation of the term Chāyā nātaka itself is extremely dubious, the shadow-play theory, however, appears to be entirely uncalled for and without foundation, and there is hardly any characteristic feature which is not otherwise intelligible by purely historical and literary considerations. —History of Skt. Lit. P. 501.

बिम्बीक्रियन्ते ।[1]

एतानि लक्षणानि दूताङ्गदादिषु न संगच्छन्ते । छायानाटके छायापदस्यौचित्यमन्यत्र गवेषयन् कीथमहोदयो राजेन्द्रलालमित्रस्यैतद्विषयकं मतमुद्धरन्नाह-नाटकाङ्गानामभिनयस्यान्तराले कदाचित् दूताङ्गदस्याभिनय उद्दिष्ट आसीत् । एतस्य हेतोर्नाटकस्याभिनयार्थं संक्षिप्तिश्छायारूपेण सम्पादिता ।[2] दूताङ्गदस्य वास्तविकं काव्यरूपं निर्धारयितुं किमपि तत्त्वमेतस्मिन् पुस्तके नास्त्येव इति कीथस्यापि मतम् ।[3]

अतो हि नाम छायानुसन्धेया । छायानाम्नः संकेततत्त्वानि दूताङ्गदे सन्त्येवेति प्रतिपाद्यतेऽस्माभिः ।

## छायापदस्य सार्थकता

तद्यथा भासस्य प्रतिमानाटकं विद्यते, तथैव सुभटस्य छायानाटकमस्तीति निश्चप्रचमेव । प्रतिमानाटके दशरथस्य प्रतिमायाः किञ्चिदभिनवमायोजनं कृतम् । एतस्याः प्रतिमाया माहात्म्यं विशदयितुमेव नाटकस्य नाम प्रतिमानाटकं कृतम् । अनया दिशा कुन्दमालेति नाम कुन्दमालाया माहात्म्यं स्पष्टयितुं वर्तते । उत्तररामचरिते सीतायाश्छायाया अभिनवायोजनस्य लोकप्रियत्वं वा माहात्म्यं वा विशदयितुं तृतीयाङ्कस्य नाम छायाङ्क इति निर्धारितम् । तदनुसारेण छायायाः किमपि विशिष्टमेव महत्त्वं दूताङ्गदे वर्तते । महादेवस्य अद्भुतदर्पणे मायारूपके सर्वाणि पात्राणि मायात्मकानि सन्ति ।

## दूताङ्गदे छायाविधानम्

दूताङ्गदे छायाया बोधार्थं प्रथमं तावत् पौराणिकी छाया प्रकल्पनीया वर्तते । छाया तु संज्ञायाः प्रतिरूपा सती सूर्यस्य पत्नी बभूव । संज्ञा सूर्यस्य

1. A play in which the actors appear as shadows cast upon a screen placed between the stage and the auditorium.—The Oxford English Dictionary.

2. It is natural to suggest, as did Pishel, that the Dūtāngada of Subhata which is styled a Chayanātaka, really was shadow play. On the other hand, Rajendralalamitra suggested that the drama was perhaps simply intended as an entr' acte, and this may be justified on the interpretation of the term of drama in the form of a shadow ; i. e. reduced to the minimum for representation in such a form.—Sanskrit Drama p. 269.

3. Ibid p. 269

तापमसहमाना पत्नीत्वे स्वकीयां प्रतिरूपां छायां नियुज्य पितुर्गृहमगमत्। कालान्तरे सूर्यस्य छायायां त्रीणि अपत्यानि बभूवुः। पश्चात् सूर्येण समाज्ञातं यदियं मम पत्नी संज्ञा नास्ति। सा छायाप्रतिरूपा एव संज्ञायाः।[1] अनेन प्रकरणेन छायायाः प्रतिरूपत्वं प्रमाणितम्। इदमेव प्रतिरूपत्वं छायानाटकस्य विशिष्टं लक्षणमिति प्रतिपाद्यमस्माकम्।

दूताङ्गदे सीतायाश्छाया मायामैथिलीति पुरस्कृता वर्तते। यदाङ्गदो रावणं सीतायाः प्रत्यावर्तनाय कथयामास, तदा तेन प्रहस्तद्वारा मायामैथिली प्रयोजिता। सा मायामैथिली प्रहस्तेन सह रावणसमीपं रङ्गपीठ आगच्छति। नाटकानुसारेण तु—

(ततः प्रविशति प्रहस्तेन सह मायामैथिली)

मैथिली—जयतु जयत्वार्यपुत्रः। (इत्यभिदधाना रावणोत्सङ्गमारोहति)

रावणः—(स्वगतम्) साधु, भो मायामयि, साधु जानासि दशकण्ठमाराधयितुम्।

अङ्गदः—(सविषादमात्मगतम्) अपि नाम जानकी पण्याङ्गनाचरितमाचरेत्। भवतु, विलोकयामि तावत्।

रावणः—देवि, विदेहनन्दिनि, प्रतिबोध्यतां रामप्रहितोऽयं शाखामृगः।

मायामैथिली—(अङ्गदं सबहुमानमवलोक्य) वत्स, अङ्गद, मम वचनैः प्रतिबोधय राघवम्—

एषामुपरि कस्मात् खिद्यसे राघव तद् व्रज निजं नगरम्।
दत्ताहं निजहृदये साक्षीकृत्य मदनमेतस्मै॥ २८

अपि च

मयि रावणाङ्कपङ्कजविलासहंस्यामद्य रघुनाथः।
राक्षसभटैर्मञ्जितभरतं भूषयतु निजराज्यम्॥ २९

अङ्गदः—(कर्णौ पिधाय) न खलु भवति जानकी यतः

अश्रुतपूर्वाविनया पर्याप्तालंकृता च शीलेन।
सा राघवस्य पत्नी पुनाति भुवनानि गङ्गेव॥ ३०

---

१, The Practical Sanskrit-English Dictionary ग्रन्थे छाया। शब्दकल्पद्रुमानुसारं च छाया सूर्यपत्नी। सा संज्ञाप्रतिकृतिः। यथा मत्स्यपुराणे ११.५, नरसिंहपुराणेऽष्टादशेऽध्याये।

अनेन छायाविधानेन दूताङ्गदस्य छायानाटकं नाम प्रसिद्धम् । अन्यत्रापि सर्वेषु तेषु छाया-नाटकेषु छायाविधानं वर्तते । तथाहि—हनुमन्नाटकं महानाटकं वा छायानाटकमिति संज्ञितम् । तदनुसारेण

रावणः—महान्तं प्रपञ्चमुत्पाद्य नूनं जानकीमनुभविष्यामीत्यवधार्यं—

भेरीनिःसाणशंखध्वनिगणतुरगस्यन्दनस्फीतनादैः
सानन्दं राक्षसेन्द्रः कटकभटभुजास्फालकोलाहलेन ।
लङ्कामापूर्य रामः स्वयमभवदथो मायया रावणस्य-
च्छिन्नान् मूर्ध्नो दधानः शिरसिरुहभरेष्वेकतः च पंच ॥ १०.१८

एवंविधो भूत्वा पुनरशोकवनिकां प्रविश्य रावणः

लङ्काभटोऽयं रघुनन्दनवेशधारी
पापो जगाम पुरतो जनकात्मजायाः ।
नाम्नापि यस्य कुत इच्छति तस्य रूपा-
दन्याङ्गनापहरणे न मनः कदाचित् ॥ १०.१९

जानकी—(रघुनन्दन-वेषधारिणं तमालोक्य) सहर्षं—

साक्षादालोक्य रामं झटिति कुचतटीभारनम्रापि हर्षा—
दुत्थायोदस्तदोर्भ्यां दरचलितकुचाभोगचैलोन्नताङ्गी ।
त्वं मामालिंग्य खेदं जहि विरहमहापावकः शान्तिमेतु ॥ १०.२२
(इत्यालिंगितुमिच्छति)

रामवेषधारी रावणः—(सविषादम्)

भूत्वा ततोऽप्यवसरे जनकात्मजायां
लङ्कापतिर्मकरकेतुशरातुरायाम् ।
क्लीबो विशीर्णमणिदण्डयुतः स्मरातः
पापात्ततः शिवशिवान्तरधीयत द्राक् ॥ १०.२१

अस्मिन् प्रकरणे स मायया राम एव बभूव । यतो हि नाम रहस्यं जानन्त्या सरमया विज्ञापिता सती सा 'नायं रामोऽपि तु रावणः' इति तथ्यं व्यजानात् ।

पुनश्च महानाटके सीतायाः प्रतिरूपं प्रयोजितं वर्तते । तद्यथा सभयं रणसंकटमुपलभ्य सप्रपञ्चम्—

पापो विरच्य समरे जनकस्य पुत्रीं
हा राम राम रमणेति गिरं गिरन्तीम् ।

खड्गेन पश्यत वदन्निति रे प्रवीरा
मायामयीं शिवशिवेन्द्रजिदाजघान ।। १२.१३
द्विधाकृतां तां पुनराददानो मायारथस्थोऽम्बरवर्त्मना च ।
ब्रह्मोपदेशात् स निकुम्भिलाद्रेर्न्यग्रोधमूलावटमाजगाम ।। १२.१४

राम :—समरचत्वरे

दृष्ट्वा मायाजनकतनयाखण्डनं रामचन्द्रो
गुर्वीमुर्वीतलमुपगतो दीर्घमासाद्य मूर्च्छाम् ।
तस्पादाग्रे पुनरनुजनिश्चेतनां प्राप्य रामं
कृत्वोत्सङ्गे स्मरसि न गिरो व्याहरन्नित्यरोदीत् ।। १२.१५

छायानाटकस्योपर्युक्तं लक्षणमविजानन्नेव डेमहाभागः छायानाटके छायाभिनयस्य ( Shadow play ) वर्तनमावश्यकं मन्यमानो भ्रान्तिवशात् सिद्धान्तयति—महानाटके किमपि तत्त्वं नास्ति येनैतस्य छायानाटकत्वं प्रमाणितं स्यादिति ।[1]

मेघप्रभाचार्येण स्वोपज्ञे धर्माभ्युदये नाट्के[2] पुत्तलकाभिनयोऽभिनवप्रयोग इति लोकप्रीत्यर्थं प्रयोजितः। पुत्तलकस्यापि प्रतिरूपत्वात् धर्माभ्युदयस्य छायानाट्यप्रबन्ध इति ख्यातिः कविना समारोपिता। धर्माभ्युदये प्रतिरूपवत्पुत्तलकप्रयोगोऽस्ति, अतएव च छायानाट्यप्रबन्ध इति तस्याभिख्या वर्तते। अनया दिशा दूताङ्गदादीनां मायामैथिली-प्रयोगेण छायानाटकमिति नाम समीचीनमस्ति ।

पशुरूपं धृत्वापि मानव-पात्राणि यदा रंगे नटन्ति तदा छायानाट्यं सम्पद्यते। यथा नेमिनाथस्य शामामृतनामके छायानाटके प्रवर्तते ।

---

1. Nor can the origin of the Mahānātaka be sought in the far-fetched hypothesis of the shadow-play, the very existence of which in ancient India is not yet beyond doubt. We have here no description of the work as a Chāyānātaka, as we have in the case of Dūtāṅgada and some other plays; and there is nothing in the work itself, in spite of its irregularities, to show that the composition was intended or ever used for shadow-pictures.—Hist. of Sanskrit Lit. p. 507.

२. तत्र रङ्गनिर्देशो वर्तते—यमनिकान्तराद् यतिवेषधारी पुत्तलकस्तत्र स्थापनीयः ।

उल्लाघराघवं छायानाटकमिति तस्य लेखकेन सोमेश्वरदेवेन पुष्पिकायां निर्दिष्टम्। तद्यथा,

इति कुमारसूनोः श्रीसोमेश्वरदेवस्य कृतावुल्लाघराघवे छायानाटके चतुर्थोऽङ्कः समाप्त इति।

नाटकेऽस्मिन् मायासीतां निर्माय तस्याश्च शिरो विलूनं कृत्वा रावणस्तां रामस्य समक्षं मृतामदर्शयत्[1]।

धर्माभ्युदयं छायानाट्यप्रबन्ध इति लेखकेन मेघप्रभाचार्येण निर्दिष्टम्। तत्र नायकस्यच्छाया पुत्तलकरूपेणाभिनयार्थं प्रयोजिता। तस्मिन् युगे चित्रद्वारेणापि नाट्याभिनयः प्रयोजित आसीत्। तद्यथोल्लाघराघवे सप्तमेऽङ्के प्रमाणितं सोमेश्वरदेवेन प्रसङ्गतो वृकमुखकार्पटिकयोः संवादमुखेन। तद्यथा—

वृकमुख :—सखे, कियदप्यन्तर्गतं मया रामलक्ष्मणयोः स्वरूपं स्वामिनो मनोविनोदाय पत्रपट्टे विन्यस्तमस्ति तदवलोकयतु। (इति पट्टमर्पयति)

कार्पटिक :—(गृहीत्वा विलोक्य च) साधु महामते, साधु।

छायानाट्यानुसारेण मनोहरमिदमालिखितं भवता। (इति वाचयति)

प्रकरणेऽस्मिन् रामलक्ष्मणयोरन्तर्गतं स्वरूपमभिनयात्मकमेवेति सुव्यक्तमेव। चित्रपट्टेषु कृतानां नायकादीनां प्रतिरूपात्मकाभिनयस्यायोजनात् छायानाट्यत्वं प्रसिद्धमिति प्रतिभाति। एतादृशं छायानाट्यं सुविदितमासीत् प्राचाम्।

## शास्त्रीय--प्रसङ्गानुसन्धानम्

न केवलं नाटकादिषु कविकृतिषु छायातत्त्वं भूयो विलसति, अपि तु नाट्यशास्त्रादिषु छायातत्त्व-विषये प्रचुरं समुपकल्पितम्। तथा हि भरत

---

१. रामः—(सवैलक्ष्यम्) प्रिये श्रूयताम्। इह हि—

मायाकृतामपि मृगाक्षि मृतिं त्वदीयां
सत्यां विदन् न सहसैव मृतोऽस्मि यस्मात्।
व्रीडाजडस्तदहमेष मृषानुरक्तः
शक्तो न दर्शयितुमात्ममुखं पुरस्ते।

सीता—अज्जउत्त एसो वि जणो इत्थ समाणावराहज्येव।

रामः—(विमृश्य) प्रिये कदाचिदस्मदीयमपि कृतविलूनं शिरस्तवाग्रे तैर्दुरात्मनिदर्शितं भविष्यति।

आविद्धकोटिकेषु रूपकेषु छायातत्त्वं निर्दिशति—

मायेन्द्रजालबहुलं पुस्तनेपथ्य-संयुतम् ॥ १३.६०

अभिनवगुप्तस्तत्र व्याख्याति-माया = मन्त्रौषधादिकृतं रूपपरिवर्तनादि, इन्द्रजाल = हस्तलाघवसादृश्यादिकृतम्, पुस्तम् = द्रुमृण्मयाकृत्यादि। भरतेन सन्ध्यन्तरेषु च माया समुपस्थापिता।[1]

अन्यत्र कपटनामकं भूषणं भरतेन परिभाषितम्—

छलयुक्तया त्वन्येषामभिसन्धानाभिभावकं कपटम् ॥ १६.३०

अभिनवगुप्तानुसारेणात्र व्याजप्रयोगेणाभिसन्धानं वञ्चना इत्यादि। कपटो वस्तुक्रमाद्दैवाच्छत्रोर्वा समुद्भूतः। वस्तुक्रमोद्भूतस्य मालतीमाधवे मकरन्दस्य मालतीवेषधारणम्, शत्रुकृतस्य छलितरामे लवणासुर-प्रयुक्तयो राक्षसयोर्मन्थराकैकेय्योर्वेषधारणम् इत्यादि। कृत्यारावणे प्रथमेऽङ्के सीतावेष-धारिण्या शूर्पणखया लक्ष्मणो वञ्चितोऽभिभूतश्च।

शृङ्गारप्रकाशे भोजः कपटं स्पष्टतरं परिभाषते। तद्यथा—

अदिव्यं दिव्यमपि वा कृत्वा रूप-विपर्ययम्।
अविद्वान् वञ्चयते येन कपटं तदुदाहृतम् ॥
सोऽयं कपटश्छायातत्त्वमेव निर्मिन्नः।

भरतेन लोस्याङ्गे चित्राकृतिभिर्नायकादीनां विनोदो वर्णितः। यथा,

यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम्।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥ ना. शा. १९.१३६

वामनश्चित्राभिनययोगेन नाट्यस्योत्कर्षं बहुमन्यते। तद्यथा—

सन्दर्भेषु दशरूपकं श्रेयः।
तद्धि चित्रं चित्रपटवद् विशेष-साकल्यात् ॥ काव्यालङ्कार १२.३०,३१

भाविकमपि तद्विधमेव—

दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता।
करोति विविधान् भावांस्तद्धै भाविकमुच्यते ॥

अभिनवगुप्तानुसारेण चित्रपुस्ताद्यपि च नाट्यस्यैवार्थभागाभिष्यन्दो यथा सर्गबन्धादि शब्दभागाभिष्यन्दः।[2]

---

१. ना. शा. १९.१०८

२. ना. शा. ६.२३ अधिकृत्य भारती।

देवानां छन्नवर्तनं तु छायानाट्यमेव। इयं छन्नवृत्तिर्भरतेन निरूपिता। तद्यथा—

नाटके छन्नवेषाणां दिव्यानां भूमिसञ्चरः।

मायानामके सन्ध्यन्तरे मायापात्रं प्रादुर्भवति। तद्यथा

नाटकलक्षणरत्नकोशे—

मयेन दानवेन सुरांश्छलयितुं प्रयुक्तः कपटो माया। यथा सुग्रीवाङ्के माया हनुमान्। शृङ्गारप्रकाशानुसारेणास्मिन् सन्ध्यन्तरे माया द्विविधा भवति—मानुषी-माया, अमानुषी माया च। तत्र अमानुषी मायाया उदाहरणं कृत्या-रावणादुद्धृतम्। कनकमृगादिरचना तु अमानुषी माया।

आरभटीवृत्तौ संक्षिप्तको भेदो विलसति। संक्षिप्तकेन आरभट्या लक्षणं 'बहुकपटवञ्चनोपेता' समर्थितम्। संक्षिप्तकस्य छायात्मकं वैशिष्ट्यं तस्य परि-भाषया स्फुटमेव। तद्यथा,

अन्वर्थ-शिल्पयुक्तो बहुपुस्तोत्थान-चित्रनेपथ्यः।
संक्षिप्तवस्तु-विषयो ज्ञेयः संक्षिप्तको नाम॥ ना. शा. २०.६८

अभिनवगुप्तानुसारेण संज्ञया क्षिप्तानि वस्तूनि विषयोऽस्येति संक्षिप्तकः। तानि वस्तूनि दर्शयति—अर्थेन प्रयोजनेनानुगताः शिल्पयुक्ताः कुशलशिल्पि-विरचिताः, अर्था यत्रेति। बहु विपुलं पुस्तस्योत्थानं प्रकटत्वं विचित्रं च नेपथ्यं खड्गचर्मवर्मादि यत्र पुस्तयोगे। यथा माया शिरोनिक्षेपे रामाभ्युदये चित्रं नेपथ्यम्।

सर्वेषु नाटकेषु निर्वहणेऽद्भुतेन भवितव्यम्। तत्र विस्मयो नाम स्थायी-भावे मायेन्द्रजालचित्रपुस्तशिल्पविद्यातिशयादिभिर्विभावैरुत्पद्यते।[1]

अनेन विवेचनेन छायातत्त्वस्य बाहुल्यं काव्यापेक्षया समुपबृंहितमेव।

मानुषैः कारणादेषां यदाभवति दर्शनम्॥ १३.२०

विपरीतलैङ्गिकभावं समाश्रित्य पात्रं यच्छायानाट्यं प्रस्तौति, तस्य विवरणं नाट्यशास्त्रे भरतोऽधोविधं प्रचिनोति—

विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसकैः॥
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह।

---

१. ना. शा. ७.२८

व्याजेन क्रीडया वापि तथा भूयश्च वञ्चनात् ।।
स्त्रीपुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि च ।
धैर्यौदार्येण सत्त्वेन बुद्धया तद्वच्च कर्मणा ।।
स्त्रीपुमांसं त्वभिनयेद्वेषवाक्य-विचेष्टितैः ।
स्त्रीवेषभाषितैर्युक्तः प्रेक्षिताप्रेक्षितैस्तथा ।।
मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् ।
तथासनविधिः कार्यः स्त्रीणां नृणामथापि च ।।

ना. शा. १२.१९५-२०२

तत्र सिंहादीनां श्वापदानामभिनयः सुप्रचलित आसीदिति सिंहाकर्षित-नाम्ना करणेनापि प्रमाणितम् । सिंहाद्यभिनयविषयं सिंहाकर्षितकमिति अभिनवगुप्तः ।[1]

इदमेव छायातत्त्वमानन्दवर्धनाचार्येणावस्थाभेदप्रसङ्गेऽधोविधं व्याख्यातम्—अचेतनानां सर्वेषां चेतनं द्वितीयं रूपमभिमानित्व-प्रसिद्धं, हिमवद्-गङ्गादीनाम् । तच्चोचित-चेतनविषय-स्वरूप-योजनयोपनिबध्यमानमन्यदेव सम्पद्यते । यथा कुमारसम्भव एव पर्वतस्वरूपस्य हिमवतो वर्णनम् । पुनः सप्तर्षिप्रियोक्तिषु चेतनतत्स्वरूपापेक्षया प्रदर्शितं तदपूर्वमेव प्रतिभाति ।[2]

नायकयोः सङ्गममधिकृत्य छायाव्यापारः शारदातनयेन भावप्रकाशने धनंजयेन दशरूपके च व्याकृतः । तद्यथा—

साक्षात्-प्रतिकृति-स्वप्नच्छाया-मायागुणादिभिः
नायिकाया नायकस्य दर्शनं स्यात् परस्परम् ।। ४.५८

चित्रनामके सन्ध्यन्तरे आलेख्याभिमतजनदर्शनोपायः सम्भवतीति सागर-नन्दी । चित्रं शिल्पविशेषः ।

## वैदेशिकनाटकेषु छायातत्त्वम्

पूर्वोक्तं छायातत्त्वं योरपीयनाटकेषु प्रचुरायते । शेक्सपीयरः स्वोपज्ञेषु वहुषु नाटकेषु प्रच्छन्नपात्राणि निवेशयति । तस्य ट्वेल्फ्थ-नाइट-नामके नाटके वायलानाम्नी कन्या बालभावं गृहीत्वा ओलिवियानाम्नी-कन्यायाः मनो जग्राह ।

---

१. अभिनव भारती ना. शा. ४.१५१ अधिकृत्य ।
२. ध्वन्यालोकः ४.७ वृत्तिः ।

वायलापि तत्र ड्यूकस्य भृत्या सती तस्य प्रेमिका सञ्जाता। अस्यां स्थितौ वायला स्वगतं व्यनक्ति—

Disguise, I see, thou art a wickedness,
Wherein the pregnant enemy does much.

अर्थात् छद्मवेशः कौटिल्यं व्यभिचरति।

रिवेञ्जरर्स-ट्रेजेडी-नामके नाटके नायिका केनापि ड्यूकेन प्रहृता। तस्याः पतिः नायिकायाः कपालं सवस्त्रं परिधाप्य रमणीरूपेण मूर्तिमतीं तां निर्ग्रन्थन-विषेण परिलिप्य ड्यूकेन सङ्गमयतिस्म। ड्यूकः भोगप्रयासे मृतः।[१]

सैड-शेफर्ड-नामके नाटके राबिनहुडोऽभ्यागतानां कृते सहभोजनमायोजयति। तत्र माडलिन-नामिका डाकिनी राबिनहुडस्य पत्न्या रूपं धारयित्वाऽभ्यागतानाकुत्सयति।[२]

अपरविधं छायानाट्यं ग्राज-नगरे १६४० ई० संवत्सरेऽभिनीतम्। तत्र जेजेबेलनामकस्य पुरुषस्य पुत्तलो मानव-वेश-संयुतं रंगपीठे श्वानैः दंष्ट्राग्रैः शकलीकृतः।[3]

मिलेट महोदयः The Art of the Drama नामके ग्रन्थे Romantic comedies of the Elizabethan Period नामकं विषयमवलम्ब्य निरूपयति—

A shipwrecked prince disguises himself and courts a pretty shepherdess who is really an exiled princess; or a king's daughter abandoned in babyhood is raised in the hut of a shepherd, where a wandering noble man sees her and returns in disguise to woo her.[४]

न केवलं नाटकेषु अपितु गद्याख्यायिकासु अपि छद्मवेषात्मकं छायातत्त्वं महीयत इति समर्थयन् मिलेटमहोदयः प्राह—

---

१. Sobel : The Theatre Hand Book P. 661
२. Ibid : P. 680
३. Oxford Companion to The Theatre P. 420
४. The Art of the Drama p. 96

Disguise is always an important element in the prose romances.[१]

अधुनापि पशु-पक्षिणां भूमिकायां मानवपात्रस्य रंगावतरणं योरपीयदेशेषु सुप्रचलितमेव। फ्रेञ्चभाषया चतुर्भिरङ्कैः १९१० ख्रीष्टसंवत्सरे प्रणीते नाटके कुक्कुटो नायको वर्तते। लेखकः प्रस्तावनया निवेदयति—

It is a symbolic poem in which I have used animals to evoke and develop the sentiments, passions, and dreams of men.[२]

नाटके बहुविधं यच्छायातत्त्वं विलसति तस्य विवरणं विश्लेषणं च मिलेट महोदयोऽधोविधं प्रस्तौति—

The unpersonation may involve the assumption of animal personality, as in primitive, dramas representing hunting, warfare, or religious invocation, or like the Cat and the Dog in Maeterlinck's Blue Bird, the Alligator in Barrie's Peter Pan, or the White Horse and the Dormouse in Alice in Wonderland.

Impersonation may be the assumption of the nature of an entity like Mercy or Nought in the Morality plays. Representations of imagined human beings by puppets or Marionettes or by the shadow actors of the oriental drama.[3]

एतैर्विवरणैः सम्यक् प्रमाणितं भवति यन्न केवलं प्राच्य-देशेष्वपि तु पाश्चात्त्येष्वपि नाटकेषु भारतीय-दृष्टि-समीहितं छायातत्त्वं सुचिरं प्ररोचनमभिमतम्।

---

१. Ibid : p. 96

२. Sobel : The Theatre Handbook p. 137

३. Millet : The Art of the Drama. p. 3.

## संस्कृत-नाटकेषु छायापदोल्लेखाः

दूताङ्गदमिति प्रसिद्धतमं छाया-नाटकं विलसति। तत्र छाया-तत्त्वं माया-मैथिलीति पात्रेण पुरस्कृतम्। सा मैथिली प्रहस्तेन मायामयी-विरचितासीत्।

**मायामयं छायातत्त्वम्**

प्रभावतीहरणमिति सप्तदशशताब्दस्य नाटके प्रद्युम्नो वर्णयति—

मया मायामवस्थाय कयापिच्छाययात्मनः।
वञ्चितेषु चिरत्नेषु विप्रयोगः प्रिये कुतः॥ ४.४२

अत्र आत्मनः छाययेति पदावली छायानाट्यं सार्थयति।

लक्ष्मीनारायणीयमिति नाटके 'छाया' पदस्य प्रयोगः नाटकीयं छायातत्त्वं व्यनक्ति—

जगत्प्रदीपो यामुपयच्छते स विवस्वान् तस्याः छाया वा समुत्पन्नेति

अद्भुतदर्पणमिति महादेवेन विरचिते सप्तदशशतकीये नाटके सप्तमाष्टमयोरङ्कयोर्यद् गर्भनाटकं सन्निवेशितं तन्मायानाटकं मायारूपकं चाभिहितम्। तत्र सप्तमाङ्कस्य सर्वाणि पात्राणि मायात्मकानि सन्ति। अष्टमाङ्कस्यान्तिमे भाग इदं मायारूपकं मायानाटिकेति संज्ञितम्। नलचरिते नीलकण्ठः 'छायानुकारिण्येव' इति पदयोजनया छायातत्त्वं निर्दिशति—

हन्त स्वप्नदृष्टतनुच्छायानुकारिणीवाकृतिस्तस्याः। अथवा किं छायानुकारिणीवेति। छायानुकारिण्येव। तृतीयाङ्के

**चित्रात्मकं छायातत्त्वम्**

षोडशशताब्दे रूपगोस्वामी ललितमाधवमिति नाटके चित्रदर्शनोपन्यासेन छायातत्त्वं विन्यस्यति। तथाहि

**कृष्णः—**

**नूनमतिक्रान्तो यामिन्याः प्रथमो यामो**
**यदेष छायाप्रपञ्चः संचुकोच।**

## पुत्तल-प्रयोगः

यवद्वीपे 'शैडो प्ले' इति विख्याते नाटके छायाप्रयोगो न सर्वथावश्यकः। पुत्तलानां प्रयोगेणापि छायानाटयमभिमन्यते।[1]

भारतेऽपि आधुनिकयुगे पुत्तलानां प्रयोगेण नाट्यविधिः साधु प्रवर्तते। तथा हि—

Karnataka's shadow puppet plays, will be presented at the world puppet festival in Washington by Hombaiah, 75, and five others. The party has left for Washington with 100 kg. of puppets and other equipment, including brass lamps with five wicks each and an ample stock of honge oil.

Hombaiah comes of a family of traditional puppetteers and has 120 plays in his repertoire. He has a rich voice which reaches the far end of the gathering without amplifiers. He is good at manipulation too. Sanjeeva Rao, 62, of the troupe is a good narrator and Hanumanthappa an expert on the Mukhaveena.

Leather puppetry has a 1000 year-old history and 400 families carry forward this traditional folk art today. They are scattered in the southern states—a nomadic tribe.

Deer, goat or buffalo skin is tanned and made soft and pliable. It is then cut and perforated and painted on with vegetable dyes to represent puranic characters. Karanataka puppets look refined with local costumes and jewellery. Deer skin puppets represent divine, goat skin mortal and buffalo skin demoniac characters.

---

१. In Java the Rāma cycle may be treated in the dramatic categories of the wayang purwa, a shadow play produced by puppets of buffalow leather etc.

Krisnamacharya : History of Classical Sanskrit literature p. 692.

In the past the *shadow theatre* was in action throughout the night, but now the duration has been cut to around three hours. The narration and songs are never reduced to writing but are passed on from father to son. *Chhayanatak* has both female and male voices.[१]

## इदंतन-पशुरूप-प्रयोगः

पशुरूपं धृत्वा नटनं स्वाभाविकमेव वर्तते । अद्यापि लद्दाख-प्रदेशे परम्परागतं सिंहनृत्यं प्रवर्तते । तत्र सिंहोचित-प्रतिशीर्षकैरावृतानि पात्राणि भव्यं नटन्ति । अन्यत्र च पार्वतीया आरण्यका उत्सवायोजनेषु विनोदपरायणा नटन्ति । तथा हि—

During festivals, one of the amusements is to dress up Koltas as deer, bullocks, dogs, sheep or goats covering them with skins. A Rajput then holds them (if they are dressed as bullocks) on a plough and pretends to plough the land. Others ride the deer, goats and dogs, forcing the Koltas to leap about and dance for the enjoyment of the crowd.[२]

स्याम-प्रदेशे लाकौन-नाट्येषु पात्राणि प्रतिशीर्षकैः दैत्यानां पशूनां वा रूपं धृत्वा नटन्ति । तत्र संगीतनृत्यादीनां बाहुल्यं प्रवर्तते ।[3]

## छायातत्त्वं लोकधर्मी नाट्यधर्मी च

छायातत्त्वं लोकधर्मी नाट्यधर्मी चोभयविधं भवति । लोकधर्मी छायातत्त्वं कथं वैचित्र्यमावहतीति अधोलिखितप्रकरेण स्पष्टं भवति—

Sir A. Ramaswamy Mudaliar, a financial wizard, loves a practical joke. When a young man with very slight growth on his face, he walked into a barber's shop and demanded a shave.

---

१. Reported in The Hindustan Times dated 12-6-80.

२. Reported in the Illustrated Weekly June 5, 1977 Koltas of Jaunsar—Bawar.

३. सेठ गोविन्द दास : पृथिवी परिक्रमा पृष्ठ ३२२

"A shave" sneered the barber, does your mother know you are out ?"

This enraged the young man, who was proud of his growth. "Why" he boasted, "I shave every two hours."

"Well, sit down", said the barber, "and if your beard grows in two hours, I'll shave you free."

"Done," clinched Ramaswamy and the barber gave him the closest shave possible.

Two hours later his jaw dropped when his customer walked in with a fairly heavy growth, He tugged it to make sure it was real, then carried out his part of the bargain.

This was Ramaswamy's way of having his revenge for the insult, for the second customer was his twin brother Lakshmanaswamy.[१]

विचित्रतरो हि सांयुगीन छायातत्त्वप्रयोगोऽधुना दृष्टः। तथा हि—

A gunman who opened fire on a Teheran street found an original way to conceal his position. He disguised himself as a donkey. Eyewitnesses said shooting broke out in South Teheran killing one youth but no body could pinpoint the source.

"I saw people running, I heard the shooting but I could not see the gunman. Then I noticed a donkey in the middle of the road. It shook every time a shot was fired. An eyewitness told the newspaper.

A small child walked up to the donkey and said the animal was shooting. People rushed to the donkey, discovered a zip in the skin, opened it and found the gunman.[२]

१. Reported in The Illustrated Weekly Feb. 1980.
२. Reported in the Hindustan Times dated 22-2-79.

अभिनयात्मकप्रतिरूपस्य पाञ्चविध्याच्छायानाट्यं पञ्चविधं भवतीति प्रमीयते। तद्यथा—

(१) मायाद्वारेण प्रमुखपात्राणां प्रतिकृतयो रङ्गपीठे नियोजिता आसन्। अभिनयकाले प्रेक्षकास्ताः प्रतिकृतीर्मूलपात्रेभ्योऽभिन्ना अमन्यन्त। एतादृशी योजना हनुमन्नाटके, उल्लाघराघवे, दूताङ्गदे च वर्तते।

(२) रङ्गपीठे प्रमुखपात्रस्य प्रतिरूपं पुत्तलकद्वारेण स्थापितम्। एतादृशी योजना धर्माभ्युदये वर्तते।

(३) प्रमुखपात्रस्याभिनयात्मकं प्रतिरूपं रंगपीठे चित्रद्वारेण पुरस्कृतमासीत्। तदेतदुल्लाघराघवस्योल्लेखेन प्रतीयते।

(४) हृदयानुप्रवेशेन, यथा सुन्दरवीरस्य अभिनवराघवे शूर्पणखा कैकेय्या हृदयेऽनुप्रविशति। एतत्सर्वं कपट-नामकं नाट्यभूषणं छायातत्त्वानुसारि।

(५) प्रतिशीर्षकैः पशुरूपं धृत्वा नटनम्। यथा शामामृते।

कथावस्तुनि प्रतिरूपस्य ( छायायाः ) आयोगाच्छायानाटकत्वं सार्थकमभवत् न तु छायायाः ( Shadow ) अभिनयस्य तत्र व्यपेक्षया।

छायानाटकस्य पूर्वोक्तमभिप्रायं समाश्रित्य छायानाटकानि विंशशताब्दं यावत् प्रणीतानि। गुर्जरप्रदेशस्य महामहोपाध्यायः शङ्करलाल ऊनविंशशताब्दे विंशशताब्दे च ध्रुवाभ्युदयामरमार्कण्डेय-श्रीकृष्णाभ्युदयादीनि प्रणीतानि। एतानि सर्वाणि छायानाटकानीति स स्वयमेव संज्ञापयति। तथापि योरपीय समालोचकाः तानि छायानाटकानि नामन्यन्तेति तेषामसदाग्रह एव।

# प्रस्तावना-लेखकः सूत्रधारः

संस्कृतरूपकेषु प्रस्तावना-लेखकः सूत्रधार आसीत् न तु कविः।

सूत्रधारः प्रायशः प्रस्तावनायामधोलिखितमवर्णयत्—

(१) प्रयोगाभिनयस्य देशकालौ (२) प्रेक्षकपरिषत्प्रशंसा (३) कवि-प्रशंसा, कवेः सत्प्रेक्षकापेक्षा च (४) नाट्यप्रबन्धप्रशंसा (५) सूत्रधाराय कविना प्रयोगार्थं कृतिसमर्पणम् (६) कविभिः राजभ्यो नाटकस्योपायनीकरणं, राजभिश्च तस्याभिनयाय सूत्रधारस्याभ्यर्थनम् (७) सूत्रधारस्य प्रयोगसाफल्यचिन्ता (८) नटानां मिथः स्पर्धा (९) पात्रक्लृप्तिः (१०) कथायोगविन्दुश्च।

अभिनवगुप्तेन सुस्पष्टमेव व्याख्यातं यत् द्विविधा प्रस्तावना भवति—पूर्वरङ्गस्याङ्गभूता, अन्यस्य वा। तत्र पूर्वरङ्गाङ्गेऽस्यां कविरुदासीनः। स्थापक एव स्वतन्त्रो निर्माता।[1] अयं स्थापकस्तु सूत्रधार एवेति स्पष्टीकृतमभिनव-गुप्तेन—सूत्रधार एव स्थापक इति सूत्रधारः पूर्वरङ्गं प्रयुज्य स्थापक सन् प्रविशेदिति।[2]

द्विविधा प्रस्तावना भवति—(१) अभिनय-विषयिणी (२) नाटक-विषयिणी च। अभिनय-विषयिणी प्रस्तावना पूर्वरङ्गस्य बहिर्यवनिकाङ्गेषु प्रत्याहारतः प्ररोचनां यावत् विलसति।[3] तस्याः पश्चात् नाटकविषयिणी प्रस्तावना सम्भवति, यत्र नाटकीय-पात्रप्रवेश-विधिर्निर्दिश्यते। अभिनय-विषयिणी पूर्व-रङ्गीया वा प्रस्तावना सूत्रधारेण विरच्यते। नाटक-विषयिणी-प्रस्तावनापि क्वचित्सूत्रधारेण क्वचित् कविना विरच्यते।

पूर्वरङ्गीय-प्रस्तावनासु कवेर्वर्णना न भवति। तथा हि,
शूद्रक-विरचिते मृच्छकटिके प्रस्तावनायां लिखितं वर्तते—

लब्ध्वा चायुः शताब्दं दशदिनसहित शूद्रकोऽग्निं प्रविष्टः।

---

१. नाट्यशास्त्रम् ५.१६८ अधिकृत्य विवृतिः।
२. नाटयशास्त्रम् ५.१६२ अधिकृत्य वृत्तिः।
३. इयं प्रस्तावना न तावद् रूपकाङ्गं, नट्वृत्तव्याप्ततया, इति वृत्तानतुप्रवेशात्। ना. शा. १९.६९ अधिकृत्य भारती। अभिनवगुप्तानुसारेण तत्रापि 'उपांशु रूपकार्थ-बीजस्य सामाजिक-हृदयभूमौ क्षेपाः। ना. शा. ५.१६८ अधिकृत्य भारती।

इयं प्रस्तावना शूद्रकस्य मृत्योरनन्तरं लिखितेति निश्चितमेव । अन्यच्च प्रस्तावनायां 'शूद्रक: कविर्बभूव, क्षितिपालः किल शूद्रको बभूव, चकार सर्वं किल शूद्रको नृप:' इत्येते सर्वेऽपि तत्सम्बन्धिलिट्-प्रयोगाः स्पष्टं द्योतयन्ति यत् शूद्रक: प्रस्तावना-लेखको नासीत् ।

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत: ॥

अभिज्ञानशाकुन्तलस्य प्रस्तावनाया द्वितीयोऽयं श्लोक: किं नाम कालिदासस्याभिप्राय उताहो सूत्रधारस्य ।

विक्रमोर्वशीये प्रस्तावनायां सूत्रधार: पारिपार्श्वकं सम्बोधयति—

मारिष, परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा । अहमस्यां कालिदासग्रथित-वस्तुना नवेन त्रोटकेनोपस्थास्ये । तदुच्यतां पात्रवर्ग: स्वेषु पाठेष्ववहितैर्भवितव्यमिति ।

एतत्तु कालिदासस्य वचनं नास्ति ।

मुद्राराक्षसस्य प्रस्तावनायां सूत्रधार:—

'आज्ञापितोऽस्मि परिषदा, यथा अद्य त्वया सामन्तवटेश्वरदत्तपौत्रस्य महाराजभास्करदत्त-सूनो: कवेर्विशाखदत्तस्य कृतिरभिनवं मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति । यत्सत्यं काव्यविशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि सुमहान् परितोषः प्रादुर्भवति' ।

किमिदं नास्ति सूत्रधारस्य विरचनम् ?

कुन्दमालाया: प्रस्तावनायां सूत्रधारस्य स्वाभाविकी कालोचिता चाधोलिखिता वाणी—

'आदिष्टोऽस्मि परिषदा—तत्रभवतोऽरालपुरवास्तव्यस्य कवेर्दिङ्नागस्य कृतिः कुन्दमाला नाम । सा त्वया प्रयोक्तव्या इति । तद्यावदस्य सन्दर्भस्य प्रयोगसाचिव्य-विधायिनीमार्यामाहूय रंगभूमिमवतरामि ।' इत्यादि न कविनिर्मितिः ।

प्रियदर्शिकाया: प्रस्तावनया नितरां प्रमाणितमेव यत् सूत्रधारस्य विरचनमेवामुखमिति । तथा हि—

सूत्रधार:—(परिक्रम्य) अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञो श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तो यथा 'अस्मत्स्वामिना श्रीहर्षदेवेन अपूर्ववस्तुरचनालङ्कृता प्रियदर्शिका नाम नाटिका कृतेति अस्माभिः श्रोत्रपरम्परया श्रुता न प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सर्वजनहृदयाह्लादिनो बहुमानात् अस्मास्वनुग्रहबुद्ध्या वा [illegible] ' इति । [illegible]

कृत्वा यथाभिलषितं सम्पादयामि। (परितोऽवलोक्य) आवर्जितानि सामाजिकानां मनांसि इति मे निश्चयः। कुतः—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पद किं पुन—
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥

(नेपथ्याभिमुखमवलोक्य) अये कथं प्रस्तावनाभ्युद्यते मयि विदितास्मदभिप्रायोऽङ्गाधिपतेर्दृढवर्मण आन्तःपुरिककंचुकिभूमिकामादाय अस्मत्तात इत एवाभिवर्तते। तद्यावदहमपि अनन्तरभूमिकां सम्पादयामि।

महाराजहर्षोऽस्या नाटिकाया रचयिता कदापि न लेखिष्यति—

निपुणः कविः परिषदप्येषा गुणग्राहिणी। ईदृश लोकप्रहर्षणं तु शैलूषोचितमेव न हर्षोचितमिति विदुषां प्रतीतचरम्।

परवर्तियुगे यत्र रत्नावल्या अभिनय योज्येत, तत्र किं नाम सैव हर्षकालिकी प्रस्तावना सूत्रधारमुखेनौचित्यं भजेत यस्यां स कथयति—

'रत्नावली-दर्शन समुत्सुकोऽयं राजलोकः'

महाराजोऽनङ्गहर्षो नवमशताब्दे तापसवत्सराजस्य प्रणेतास्ति। एतस्य नाटकस्य प्रस्तावनायां नटी-सूत्रधारयोरग्रेतनः संवादः—

नटी—न खलु किं च आज्ञापयत्वार्यः।

सूत्रधारः—आर्ये, शरद्गुणाविष्कारिणा नेपथ्येन वत्सराजस्य मे वासवदत्ताभूमिकां सम्पादयिष्यतीति प्रस्तुतम्। (स्मृत्वा) यावदसम्पादयन्त्यैव सर्वं संपादितं भवत्या।

नटी—(विचिन्त्य) आर्य, किं तापसवत्सराजं पश्यन्ति सामाजिकाः?

सूत्रधारः—आर्ये, अथ किम्। ननु तस्यैव सकलनरेन्द्रचन्द्रमसः श्रीनरेन्द्रवर्धनरङ्गहर्षापरनाम्नः श्रीमातृराजस्य कृतौ कृतानुरागो जनः सम्प्रति। स च कविः—

सद्वृत्तानुगतो गतो गुणवतामाराधनेऽनुक्षणं
कर्तुं वाञ्छति सर्वदा प्रणयिनां प्राणैरपि प्रीणनम्।
मात्सर्येण विनाकृतः परकृतीः शृण्वन् वहत्युच्चकै—
रानन्दाश्रु जलप्लवाप्लुतमुखो रोमाञ्चपीनां तनुम्॥२

स च किल कविरेवमुक्तवान्। यथा हि—

न कवित्वाभिमानेन न च व्यामूढचेतसा।
रचितं नाटकमिदं स्वगोष्ठीभावितात्मना ॥३

सूत्रधार:—(आकर्ण्य) आर्ये, न कश्चिद्विलम्बः। तथा ह्ययं मम कनीयान् भ्राता धृतकंचुकिभूमिक इत एवाभिवर्तते। तदेहि, आवामप्यनन्तरकरणीयं सम्पादयावः।

इयं प्रस्तावना अनङ्गहर्षेण न विरचितेति स्पष्टमेव ध्वन्यते।

द्वादशशताब्दे काञ्चनाचार्यस्य पार्थपराक्रमनामके व्यायोगे प्रस्तावनायां वक्तव्य राजदूतः सूत्रधाराय पत्रमर्पयति। पत्रे राजा जयदेवः सूत्रधारं निवेदयति—वीररसाद्भुतेन रूपकेण गदाधरप्रमुखपरिषदमानन्दयतु।

चतुर्दश—शताब्दे सौगन्धिकाहरणस्य सूत्रधार एव वक्तुमर्हति न तु कविः—

राज्ञा प्रतापरुद्रेण सम्भावितैः सभासद्भिराहूय सबहुमानमादिष्टोऽस्मि।

परिवर्तियुगे खीष्टसवत्सरस्य षोडशशतके रूपगोस्वामी विदग्धमाधवं विरचितवान्। स च तस्य प्रथम-प्रयोगस्य सूत्रधारोऽपि बभूव। तत्र प्रस्तावनायां स कथयति—

सूत्रधार :—मारिष, निर्मितः किमिति तन्नाटकपरिपाठीभिर्वर्णिकापरिग्रहः। (क्षणं विमृश्य) भवतु—

ममास्मिन् सन्दर्भे यदपि कविता नातिललिता
मुदं धास्यन्त्यस्यां तदपि हरिगन्धाद् बुधगणाः।
अपः शालग्रामाप्लवनगरिमोद्गारसरसाः
सुधीः को वा कौपीरपि नमितमूर्धा न पिबति ।।४

खीष्टसंवत्सरस्य सप्तदशशतके नीलकण्ठेन नलचरित्रमिति नाटकं विरचितम्। एतस्य नाटकस्याधोलिखितेन प्रस्तावनांशेन स्पष्टं प्रतिभाति यत् सूत्रधार एवैतस्य कालोचितं प्रस्तावनां निबध्नाति स्म। तथा हि—

सूत्रधार :—कस्य वा पुनरन्यस्यानुग्रहेण भविष्यति। तत्रभवत्याः परदेवतायास्तदवतारस्य च भगवतो नारायणाध्वरिणः प्रसादेन। उक्तं च तेनैव कविना—

चन्द्रशेखरसव्याङ्गचरणोन्मार्जनाम्भसाम् ।
विवर्ता जगदम्भके विहरन्ति मदुक्तयः ॥१

नारायणाध्वरीन्द्राय नमोऽस्तु ज्ञानसिन्धवे ।
शारदा यत्कटाक्षाणां साप्यचेतनकिंकरा ॥१०

परिपार्श्विक :—कथमिदमतिगम्भीरहृदयं रूपकमार्येण तत्त्वतः परिज्ञातम् ।

सूत्रधार :—(विहस्य) अस्त्युपायः

पारिपार्श्विक :—क इव ।

सूत्रधार :—अग्रजन्मा खलु तस्य रसिकलोकमौलिमणिराच्चादीक्षितो व्याकरोदिदं रूपकमनुजस्नेहात् ।

पारिपार्श्विक :—कथमयं कविरन्तर्मुखस्त्रय्यन्तविचारप्रवृत्तोऽपि करोति स्म नाटकेऽप्यभिरुचिम् ।

सूत्रधार :—यतोऽयमीदृशस्तत् एवोक्तमत्रापि विषये तेनैव ।

कालं जेतुमुपायौ द्वौ कलिकल्मषसंप्लुतम् ।
कथा वा निषधेशस्य काशी वा विश्वपावनी ॥११

( पुनः सहर्षम् ) 'सर्वं सुघटितम्' तथा हि कविर्विदितः, काव्यं च । अन्यदेव कौशलमस्माकं भरततन्त्रेषु, परिषदपि रसोन्मुखी ।

पारिपार्श्विक :—सत्यमेतत् । कथमद्य पुरोभागी खललोकः सहतामस्माकमियन्तमुत्कर्षम् ।

सूत्रधार :—सहतां मा वा । किमेभिः ।

प्रायो व्याहन्यमानापि प्रत्यूहैरन्तरान्तरा ।
लब्ध्वैव कीर्तिरस्माकं नलस्येव विदर्भजा ॥१२

अद्वितीयः किल रूपकाभिनयेष्वनुजो मे रङ्गशेखरः । यदेष यथाचिन्तितमेव स्वप्नदर्शनात् प्रभृत्युन्मनायमानस्य तद्विनोदनायैव विसृष्टनिखिलराजकस्य विदूषकमात्रोपसेवितस्य नैषधस्यैव भूमिकामादाय प्रविशति रङ्गमण्डपम् । तदेह्यावामप्यनन्तरपात्रनिर्वर्तनाय गच्छावः ।

एषा प्रस्तावना सूत्रधारस्यात्मकथैव प्रतिभाति । पुरा कवयः स्वप्रबन्धान् प्रयोगार्थं सूत्रधारेभ्य आर्पयन् । कवीनां सम्यग्ज्ञातारो वा प्रश्नपृश्निद्वारेण वा प्रासंगिकवार्त्तापरिचेतारो वा सूत्रधाराः, प्रस्तावनासु स्वकीयप्रतिभया कविकाव्यविषयिणीं सामग्रीं लोकरुचिवर्धनाय युञ्जन्ति स्मेति नलचरित्रस्योपरिलिखितप्रस्तावनांशेन स्फुटीभवति । प्रस्तावनाद्वारेण प्रेक्षकाः प्रयोगं प्रति सातिशयमभिरता भवेयुरित्यस्यां कलायां सूत्रधाराः सुनिपुणा बभूवुः, न तावत्

कवय इति निःसन्दिग्धमेव। एतत्खलु यज्ञनारायणदीक्षितस्य रघुनाथविलासस्य प्रस्तावनया स्पष्टमेव। तत्र सूत्रधारस्य केनचित् नटकेसरिणा कूटयुद्धं समुपस्थाप्यते। तत्र नटकेसरी नेपथ्ये वदति—

> प्राप्तोऽहं नटकेसरी परिजनैरन्यैः शठैः किं नरैः
> किं वा दप्पलवेणधुत्तणडणे हंसेहि सत्ति तुमं।
> शक्ति मे नटने स एव लटहः सन्ध्यानटः प्रेक्षितुं
> सो नट्टा अ विहू अयं खु भुवणे संझाणडाणं सदं ॥९

नटकेसरी चाग्रे कथयति—

कुत्रापि 'नाटकस्य कर्ता' नायकोऽप्युभावेकसभावस्थितौ, मयेत्थमभिनयसमये न दृष्टचराविति।

अपरं च नटी नायकानां भूमिका-नियोजनं निवेदयति। निश्चितमेवैतत्सर्वं सूत्रधारस्य विरचनम्।

भूदेवशुक्लस्य धर्मविजये नान्द्यन्ते सूत्रधारः प्रस्तावयति

सूत्रधारः—अलमतिविस्तरेण। अद्य तावदाहूय समादिष्टोऽस्मि श्रीमद्दिल्लीदयितवेतनदानामात्येन महनीयचरित-श्रीमहता केशवदासेन, यद्वयं धर्मशास्त्रानुसारिप्रयोगाभिनयेनात्मानं विनोदयितुमिच्छामः। तद् भूदेवशुक्लग्रथितेन नवेन धर्मविजयनाम्ना नाटकेन सम्भावनीयेयं स्मार्तसभेति। तत्सदनमुपेत्य कान्तामाहूय संगीतकमनुतिष्ठामि।

अयं प्रस्तावनांशः प्रासंगिकः स्थानकालोचितः प्रयोगाश्रयाभिलक्षकः सर्वथा सूत्रधारस्य व्यापार इति प्रतिभाति। अतः परं सूत्रधारो नटीं ब्रूते—

नटी—को नु खलु तुष्टेऽस्माकं लाभः।

सूत्रधार :—दारिद्र्यभङ्गः।

नटी—कथमिव।

सूत्रधार :—प्रसिद्धप्रभावो महावदान्यः खल्वसौ राजर्षिः, यः पूर्णमनोरथैरर्थिभिरनिशमेव श्लाघ्यते। यथा,

> चित्तं मानसमुन्नतं करयुगं श्रीपुष्करं पद्मजा—
> जन्मस्थानतया समुद्रमहिमाक्रान्तः शयो दक्षिणः।

सेतुर्धर्मकथाम्बुधेस्तव मतिस्त्वां च प्रभासं जनः
प्राप्तः केशवदास चित्रमिह किं प्राप्नोति यद्वाञ्छितम् ॥

सभापतेरौदार्यादिकं सूत्रधारस्यैव वर्णनीयं भवति न तु कवेः ।

महादेवस्याद्भुतदर्पणे तु सूत्रधारविदूषकयोः संवादः सूत्रधारलेखनोयोग्य एव न कविव्यापार इति अधोलिखितसंवादांशदिशा प्रतीयते—

सूत्रधार :—अस्ति तस्य किल सूनुरायुष्मानस्माकं गर्भरूपो वत्सो महादेवः ।

विदूषक :—अत्थि सुणीअदि गोट्ठीसु

सूत्रधार :—स किल बालजनसुलभेन चापलेन कविगणनामिच्छन्नाटकमिति यदेतदभिनवमभिनिर्वर्तितवान् । तदद्य कर्मान्तरेषु युष्माभिः प्रयुज्यमानमार्या यावत् परिशोधयन्तीति ।

नल्लादीक्षितस्य शृङ्गारसर्वस्वभाणे सूत्रधारः कवेर्वक्तव्यमुद्धरति—

निबध्नन्ति स्वैरं कृतिमिह कियन्तो न भुवने
रसं किन्तु व्यंक्तुं प्रभवति कविष्वेषु कतमः ।
मम श्रीमल्लम्बोदरकृपापांगितगिरः
प्रबन्धेऽस्मिंश्चेतः कुतुकमनुबध्नाति तदपि ॥

न कश्चित् भारतीयः कविः सभासु रंगपीठे प्रपञ्चार्थं स्वयमेव प्रस्तावनायामीदृशमाटोपं स्फोरयेत् ।

प्रस्तावनालेखकः सूत्रधारो वा कविर्वेति विवेचनप्रयासे शेषकृष्णप्रणीतकंसवधस्य प्रस्तावनाया अधोलिखितांशो महदुपकरोति—

सूत्रधार :—तस्यास्ति तण्डनकुलामलमण्डनस्य
श्रीतोडरक्षितिपतेस्तनयो नयज्ञः ।
नानाकलाकुलगृहं स विदग्धगोष्ठी-
मेकोऽधितिष्ठति गुरुर्गिरिधारिनामा ॥ १.१२

तेन चाहं सबहुमानमाहूय ससमाजेनादिष्टोऽस्मि ।

नटी—जइ एवं ता कीस चिन्तापज्जाउलहिअओ विअ चिरअन्तो चिट्ठसि ।

सूत्रधारः—प्रिये महदेव चिन्तास्थानं सभ्योपस्थानम् । तथा हि—

नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते ।

वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना
कष्टं भोः प्रतिभावतोऽप्यभिसमं वाणी नवोढायते ॥

नटी—अज्ज, जइ एव्वं ता किं ति अप्पा संकडे पाडिज्जइ।

सूत्रधार :—आर्ये,

त्वरयति नृपगोष्ठी-संस्तवख्याति-लिप्सा
जडयति च विदग्धाराधनासाहसिक्यम्।
इति न समधिकर्तुं रूपकं नो विरन्तुं
प्रभवति बत दोलारोहदुःस्थं मनो मे ॥१५

नटी—को उण उआओ विअद्धाराहणस्स।

सूत्रधारः—प्रिये, ममाप्येष विमर्शश्चिरं चेतसि वर्तते यतः,

प्राचां वाचामुदारन्नवरसलहरीहारिबन्धान् प्रबन्धान्
आपीय श्रोत्रपात्रैरपहृतहृदया हन्त तर्षप्रकर्षात्।
गुम्फैः सम्फुल्लमल्लीसरससुमनसां माधुरीमुद्गिरन्तः
सन्नः सन्तोषमन्तः कमपि सहृदयास्वाद्यमेते वहन्ति ॥१६

... ... ... ... ... ... ... ...

(स्मृतिमभिनीय। सहर्षम्) आर्य दिष्ट्या समासादितः खलु दुरन्त-चिन्ताकान्तारहेतुः। तथा हि,

पृथ्वीमण्डलमौलिमण्डनमणिः श्रीमन्नृसिंहात्मजः
कृत्वा कृष्णकविः कुतूहलवशादस्मासु यन्न्यक्षिपत्।
नाट्यं कंसवधाभिधानमधुना तस्य प्रयोगोद्यमं
विद्वद्राजसमाजमानसमहानन्दाय विन्दामहे ॥१९

... ... ... ... ... ... ... ...

नटी—णं भणामि पसीअ कविणो विअ तस्स वि महाकइणो वाणी विअद्धजणस्स पज्जुत्ता भोदि त्ति।

सूत्रधार :—बाढम्। यतः

मौलौ मन्दारदाम-भ्रमदलिपटली-काकलीं श्रोणिबिम्बे
कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमंजीरशिंजाम्।
उत्संगे कीरगीतं स्तनभुवि मम्मणं बल्लकीपंचमं वा
तत्काव्ये दत्तकर्णा शिवशिव मनुते भारती भारमेव ॥२१

अपि च—

यः पीयूषमयूखधामनि सुधासाराच्छकच्छेऽपि यः
क्षुभ्यत्-क्षीरसमुद्र-सान्द्रलहरीलावण्यपूरेऽपि यः ।
यः कान्ताधरपल्लवे मधुरिमा नासौ समुद्गाहते
श्रीविद्वत्कवि-कृष्णपण्डित-वचोवीचीसमीचीनताम् ॥२२

उपर्युक्तसन्दर्भस्य भाषा सूत्रधारस्य स्वाभाविकी उताहो कवेरिति विपश्चिदालोचकानां नाप्रतीतम् । अन्यच्चात्मप्रशंसा तु वैरस्यमावहतीति सापवादमेव प्राचीनकविभिरूरीकृतम् । अन्यथा वा गौणरीत्यापि सूत्रधारमुखेन कवेरात्मप्रशंसा सोल्लुण्ठमेव ध्रियेत समसामयिकप्रेक्षकवृन्दैः ।

इदं कंसबधमिति नाटकं कविः सूत्रधारादिषु न्यक्षिपत् प्रयोगाभिनयार्थमितिप्रस्तावनायां प्रकाशितम् । इयं प्रथा पुरा प्रवर्तितासीत् यत् कश्चित्कविः स्वीयं प्रबन्धं सूत्रधाराय समार्पयत् । सूत्रधारो लोकरुचिकरीं प्रस्तावनां तस्य प्रणिनाय इत्यासीत् प्रयोगोद्यमस्तस्य । सुस्पष्टमेवैतत् प्रतीयतेऽतिरात्रयाजिनः कुशकुमुद्वतीयस्याधोलिखितेन प्रस्तावनांशेन—

( प्रविश्य ) पारिपार्श्विकः—अद्य श्रीहालास्यचैत्रोत्सवयात्रायामार्यमिश्राः समापतन्ति ।

सूत्रधारः—किं समापतन्ति—

अन्योन्यप्रवितन्यमानविविधालापान्तरालापतन्-
नानातन्त्रकृतान्त—खण्डनसमाधानाभिधानोर्मिला ।
विद्वद्भिर्निरवद्यपद्यकृतिनिस्तन्द्रैः कवीन्द्रैर्वृता
लब्धेयं परिषन्मया कवयितुर्निस्सीमभाग्योदयात् ॥

उक्तं हि मयि स्वकृतिमर्पयता पण्डितम्मन्यदुर्जनसंवादनिर्विण्णेन कविकुलाग्रगण्येन

विभावादिस्वादूकृतनवरसा स्वादुचतुरा
यदि स्युः श्रोतारस्सुकृतपरिपाकेन मिलिताः ।
तदा तेषामेव प्रकटय पुरस्तान्मम कृतिं
न चेदास्तां गूढा चिरमियमनिष्पन्नसदृशी ॥

इति तदेषा परिषदभिमता तस्य कवेः ।

( परिषदं निर्वर्ण्य, सानन्दम् ) अथवा किमभिमतेति सर्वस्यापि प्रार्थितदुर्लभैवैषा । यतः

विद्वद्वादविवादकालयुगपद्विष्फूर्त्यहंपूर्विका
निर्यद्युक्तिसहस्रदर्शितनिजाहीन्द्रावताराकृतिः ।
कर्तुं कारयितुं तथा रसयितुं काव्यानि नव्यान्यलं
भूष्णुर्भाति सभासभाजितमतिः श्रीनीलकण्ठाध्वरी ॥

नटी—एआरिसो कविन्दो अम्हे कुसला पओअमग्गेसु ।
रूवअमिदं अणुरूवं तहविण सामाजिएसु विस्सासो ॥

एतत्सर्वमप्पादीक्षितस्य मदनभूषणभाणस्य प्रस्तावनयापि प्रमाण्यते। तथा हि—

सूत्रधार :—(प्रतीचीमवलोक्य सानुमोदम्) अये रंगशेषनाथो नाम मम श्यालः परिगृहीतविटशिखामणिभूमिकः संकेतितमदनभूषणनामा इत एवाभिवर्तते। यथायम्—

मध्याबद्धदुकूलदश्यविरणत् सौवर्णसूत्रस्फुरद्
मुक्तादाम-विभूषण: श्रवणयोर्निक्षिप्तनीलोत्पलः ।
आलिप्तो हरिचन्दनैर्मृगमदैः पिष्टातकैर्घूर्णयन्
नेत्रे स्कन्धतलावलम्बिवसनः साक्षाद्रतीशोऽपरः ॥

कविः पात्रस्य वर्णनां न करोति, अतएव सूत्रधारस्यैवैतानोति निश्चप्रचम्।

चोक्कनाथस्य कान्तिमती-शाहराजीये नाटके प्रस्तावनायां पात्रक्लृप्तिः निदर्शिता वर्तते। तद्यथा—

सूत्रधार :—कुम्भकोणनगरवासिने चित्रवेषाय पत्रिकां प्राहिणवम्। सखे कान्तिमतीशाहराजीयं नाम नाटकमभिनेतुं त्वमायाहि शीघ्रं परिजनैः सहेति।

पारिपार्श्विक :—साध्वनुष्ठितं भावेन। यतः

अत्यल्पेन च रूपकेण जनयत्याश्चर्यमन्यादृशं
नानावेशपरिष्कृतैरभिनयैः सोऽयं नटाग्रेसरः ।
सम्प्रत्यद्भुतसंविधानमधुरेणानेन सामाजिका-
नेतान् रंजयतीति भाव भणितं यत् तावदस्त्यत्र किम् ॥

सूत्रधार :—उत्तरमपि तेन प्रेषितम्। स्यादेतदेव सन्ध्यासमये सह परिजनैः समागच्छामि। किन्तु विदूषककविराक्षसस्य च वेषपरिग्रहाय सज्जीभवतु भवानिति।

आनन्दरायमखिनः विद्यापरिणयनस्य प्रस्तावनानुसारेण तु सूत्रधार एव प्रस्तावनाप्रणेता। तस्य पारिपार्श्विकेन सह संवाद एवं प्रवर्तते—

सूत्रधारः—स तावत् 'इदं नाटकमुचितेषु प्रयोक्तव्यम्' इति सबहुमानमस्मद्वशे समर्पितवान्। अनेन सुकरमभिरूपपरिषदनुरञ्जनम् इति ममाध्यवसायः।

... ... ... ... ... ...

पारिपार्श्विकः—...एतत्प्रणीतमभिनवमिदं नाटकमस्माभिरभिनीयते इति वाङ्मनसातिवर्ति ननु भाग्यमिदमस्माकम्।

सूत्रधारः—तत्प्रणीतमिदं नाटकमिह प्रयुञ्जानस्तदनुगुणसकलगुणरमणीयानत्रभवतः सामाजिकानुपतिष्ठे।

सोऽयमानन्दरायमखो स्वकीयं जीवानन्दनन्दनं नाम नाटकमुपर्युक्त सूत्रधाराय समर्पितवान्। अयं सूत्रधारस्तस्य प्रस्तावनायाः प्रणेता। प्रस्तावनाया अन्तिमभागे पारिपार्श्विकेन सह तस्य संवाद एवं प्रवर्तते--

परिपार्श्विकः—एवं च मन्ये त्वया सह स्पर्धमानोऽपि विकटनामा नटवटुरभिनयविद्यायां महदनुग्रहात्त्वयैव विजेष्यते इति।

सूत्रधारः—विकटो नाम नटवटुर्मया सह स्पर्धत इत्यतत्त्वविदो वचनम्। शृणु तावत्—

अभिनयविद्याविषये दुरहकाराकुलीकृतो विकटः।
स नटवटुर्मां वाञ्छत्यभिभवितुं जीवमिव यक्ष्मा ॥१५॥

सूत्रधारस्य वैयक्तिकमिदं संसूचनं न कवेरिति स्पष्टमेव।

कृष्णदत्तमैथिलविरचितपुरंजनचरितस्य प्रस्तावनाया अधोलिखितांशेन सूत्रधारप्रणेतृत्वं निश्चीयते—

सूत्रधारः—यत्किल कृष्णदत्तकविना मैथिलेन पुरंजनचरितं नाम नाटकमस्मासु समर्पितम्।

लोके हारि पुरंजनस्य चरितं प्रौढः कविमैथिलो
नाट्ये दक्षतमा वयं च तदयं स्वर्णेन योगो मणेः ॥४॥
... ... ... ... ...

सूत्रधार :—सखा मम गुणाकरो नाम मामनापृच्छ्य व्यापारानुरागतो नन्दिवर्धननगरमागतो दर्शितकामरूपगुणप्रकाशया कयापि कामकन्दलया वशीकृतोऽबलीभूय किमपि न प्रतिसन्दधातीति चिन्तामापन्नोऽस्मि ।

नटी—अज्जस्स अण्णए मये तुह समीवं सो आणीअदि, अज्जेण उण पडिवोहणिज्जोत्ति ।

चोक्कनाथस्य सेवन्तिकापरिणयनाटकस्य सूत्रधाररचितायां प्रस्तावनायां प्रयोगस्य विवरणं वर्तते । तदनुसृत्य चोक्कनाथ इदं नाटकं बसवक्षितीन्द्राय समर्प्य स्वपुरं प्रयातः । पश्चात् राजा सूत्रधारमाहूयावादीत्

पंचषदिवसैरेतद्रूपकमभ्यस्य सानुबन्धिजनः ।
अभिनीय भरतदेशिक नन्दय नाना कवीन्द्रसन्दोहम् ॥

सूत्रधारस्तु पात्रक्लृप्तिमकरोत्—

गृह्णाति पुत्रो मम नेतृभूमिकां सेवन्तिकायाश्च पितृव्य-नन्दनः ।
तस्याः सखीनां गृहिणीसहोदराः कौषीतकस्य त्वमहं महामतेः ॥

मौहूर्तिकस्य महामतेर्भूमिका मया परिगृह्यते त्वया च विदूषककौषीतकस्य परिगृह्यतामिति ।

राजचूडामणिदीक्षितस्य कमलिनीकलहंसनटिकायाः प्रस्तावनापि सूत्रधारस्यात्मकथा सर्वथा वर्तते । तद्यथा—

सूत्रधार : —तदद्य किमप्यभिरूपं रूपकमभिनीय विनोदनीया विस्मयनीयमनीषोन्मेषा परिषदेषा ।

पारिपार्श्विकः—तेन (राजचूडामणिना) हि गर्भसप्तमहायने विरच्य्य सबहुमानमस्माकं हस्ते दत्ता किल कमलिनी-कलहंसनामधेया श्रृङ्गाररसमणिपेटिका नाटिका ।

युवराजकवेः रससदनभाणस्य प्रस्तावनायां—

सूत्रधारः—(स्मरणमभिनीय ।) अहो, महान् प्रमादोऽस्माकम् । यत्परुदेव तत्रभवता युवराजेन 'अस्मत्कृतं किमपि भाणं प्रयोगपदवीमवतारय' इत्यस्मत्करे समर्पितम्

भास्करकवेः श्रृङ्गारकेतुलीलातिलकभाणस्य अधोलिखितः प्रस्तावनांशः सूत्रधारस्य प्रयोगविषयकमाचारं निबध्नाति—

सूत्रधार :—पूर्वंकं प्रबद्धमिदं श्रीविक्रमदेवेन राजाराजोपमेन राजराजेनानेककविभिरानीयोपायनीकृतेषु निबन्धनेषु निर्धार्य नियुक्तमित्यार्यमिश्राणामाज्ञापना।

सूत्रधारः—अथ किं, नैव युवयोरयं भागिनेयो भर्गदासः प्रथमरङ्गप्रवेशकुतूहलकण्टकितकलेवरोऽभिनवभाणाभिनयानुरूपिकां भूमिकामादायालंकुरुते नेपथ्यद्वारभूमिम्।

वत्स, का पुनस्तवाभिनयानुसारिणी गाथिकी ? (पुनः सस्मितम्) विदितमेवैतत्—

पृष्ठमात्रे मया यत्ते दृष्टिरासीदधोमुखी।
प्रत्यङ्गं पुलकोद्भेदे स्वेदैश्चालङ्कृतं वपुः॥

भवतु, प्रवेशानन्तरं प्रथममभिनेयमिदानीमेव प्रसृतम्। (नटीं प्रति) आर्य, नन्वावामप्यन्तेवासिप्रतिबिम्बितप्रयोगप्रकाशप्रेक्षणकुतुकिनौ तावत्प्रेक्षकावेव भवावः।

अनन्तदेवस्य कृष्णभक्तिचन्द्रिकानाटकस्य प्रस्तावनानुसारेण तु कविः स्वयमेव सूत्रधारं निवेदितवान्—

सखे पश्यामि बहुशः सखेदं त्वामहर्निशम्।
संसारे तेन कंसारेराराधनमुदाचर ॥इति॥

तदनुसारेण तु सूत्रधारो ब्रूते—

तदहमस्यामेव सभायामस्यैव कवेरिममेव निबन्धमधुनैवाभिनीय प्रतिपादयामीति।

घट्टशेषस्य सपिण्डीकरणनिरासस्य प्रस्तावनाया सूत्रधारो वदति—

दासोऽहं रंगवासी निजपितृकलितव्यर्थवाग्जालतूल—
स्तोमाग्निं नाम सन्दर्भकमिति ललितं सम्प्रयोक्तुं प्रवृत्तः॥
... ... ... ... ... ....
प्रवृत्तिरस्मदीया स सन्दर्भस्त्वतिशोभनः।
सभायां तु प्रयुक्तश्चेत् सर्वान् सन्तोषयिष्यति॥

रङ्गनाथस्य रघुवीरविजये सूत्रधारो नटीं ब्रूते—

श्रीरामः कृतिनायकः कविरपि श्रीरङ्गनाथो गुरुः
शेषाद्रीशमहे नितान्तरसिकाः प्राप्ताश्च संख्याविदः।
मद्भर्याश्च रसानुवादनविधान्योन्यमुत्सेकिनः
प्राप्तासि त्वमपीह नाट्यकुशला किं वाञ्छितं मे परम्॥

सुन्दरवीररघूद्वहस्य अभिनवराघवनाटके सूत्रधारः पात्रक्लृप्तिं निदर्शयति। तद्यथा—

सूत्रधारः—(सहर्षं नेपथ्याभिमुखमवलोक्य) कथमुपक्रान्तमेव कुशलैः कुशीलवैः। यदद्य मे भागिनेयः कैकेयीवेषधारिण्या स्वगृहिण्या परिकलितदशरथनेपथ्यः महोद्यानविहरणोद्युक्त इव लक्ष्यते। तदद्यानन्तरकरणीयाय सज्जीभवावः।

प्रस्तावना-विरचनं सूत्रधारः कथमकरोदिति भरतेन नाट्यशास्त्रेऽधोलिखितेन पद्येन निर्दिष्टम्—

मुखबीजानुसदृशं नानामार्गसमाश्रयम्।
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत्॥ ना० शा० ५.१६८

इदं काव्योपक्षेपणं नाम सूत्रधारस्य सहजं कर्म, न तु कवेः। नाट्याश्रितं काव्यमेव कवि सूत्रधाराय प्रयोगार्थमदात्। पश्चात् सूत्रधारस्तु—

प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम्। ना० शा० ५.१६९

सूत्रधारस्तावत् कविकर्मणि निपुण आसीदिति वेमभूपालेन समुद्धृतम्। तथा हि—

सूत्रधारः स्मृतो नाट्ये सूत्रं धारयतीत्यतः।
विद्वान् वाग्मी कविर्दक्षस्तौर्यत्रयविचक्षणः॥
नाट्यप्रयोगकुशलो रसभावविवेचकः।
नानादेशसमुद्भूतवेशभूषाविशारदः॥
कामशास्त्ररहस्यज्ञो नानाशिल्पविचक्षणः।
ऊहापोहान्वितः शक्तो धारणे चोपदेशने।
उत्तमप्रकृतिर्नाट्याचार्यः स सूत्रधारकः॥

भरतकोशे पृ० ९७०

अभिनवगुप्तानुसारेण—कवित्वयुक्तो नटः।[१] इत्यनेन नटानां काव्यरचनाधिकारः प्रमाणितः।

यत्र हि नाम प्रस्तावनासु सूत्रधारोऽनुकरणं करोति, ततः प्रभृति कविव्यापार आरभ्यते। तथा हि मृच्छकटिके सूत्रधारः कथयति—

---

१. ना० शा० १७.१०१ अधिकृत्य भारती।

एषोऽस्मि भोः कार्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्तः। अविद अविद भोः चिरसंगीदोवासणेण सुक्खपोक्खरणलाइं विअ मे बुभुक्खाए मिलाणाइं अंगाइं। इत्यत आरभ्यामुखान्तं यावत् कविना विरचितो भागः। उत्तररामचरितेऽपि सूत्रधार एवंविधं वदति प्ररोचनायाः पश्चात्—

एषोऽस्मि कार्यवशादायोध्यकस्तदानीन्तनश्च संवृत्तः इत्यत आरभ्यामुखान्तं यावत् कविना विरचितो भागः प्रस्तावनायां समाविष्टः। गोकुलनाथस्यामृतोदये यतः सूत्रधारो वदति—तस्यामृतोदयं नाम नाटकमभिनिनीषतः पूर्वपरिगृहीतभोगभूमिकापरिहारेण विविक्तकेशमूरीकुर्वन्तु भवन्तः। ततः प्रभृति कविव्यापारः प्रस्तावनायाम्।

अभिनवगुप्तेन स्पष्टमेव व्याख्यातम्—तत्र प्रस्तावना न तावत् रूपकाङ्गं नटवृत्तव्याप्ततयेतिवृत्ताननुप्रवेशात्।[1]

नान्दी

नान्द्याः कर्ता को भवतीति प्रश्नः समुदेति। अस्मिन् विषये बहूनां नाटकानां लेखकस्य नाटचदर्पणस्य प्रणेतुर्मत मुद्धरणीयम्—

यत्र तु कविकृता नान्दी न दृश्यते, तत्रापि रङ्गसूत्रणकर्तृकृता द्रष्टव्या।[2]

अनेन स्पष्टं प्रमाण्यते यत द्विविधा नान्दी भवति—कविकृता सूत्रधारकृता च।

१. ना० शा० १९.६९ अधिकृत्य भारती।
२. ना. द. ३.१ अधिकृत्य विवृतिः।

## शारीराः सामान्याभिनयाः

षड्विधः शारीराभिनयो भवति—वाक्यम्, सूचा, अङ्कुरः, शाखा, नाटचायितम्, निवृत्त्यङ्कुरश्च । यत्तु पूर्वमाङ्गिकोऽभिनयः प्रोक्तः स एव वाचिकसात्त्विकाभिनयाभ्यां व्यामिश्रोऽत्र शारीराभिनयः पूर्वोक्तस्याङ्गिकाभिनयस्यावान्तरभेद एव ।[१] अस्मिन् प्रकरणे षड्विधेषु अभिनयेषु सात्त्विकाभिनयस्य विशेषो भवति ।

### वाक्याभिनयः

भरतानुसारेण—

नानारसार्थयुक्तैर्वृत्तनिबन्धैः कृतः सचूर्णपदैः ।
प्राकृत-संस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः ॥ २२.४४

वाक्याभिनये पाठ ईदृशो भवेद् यत् रसस्यौचित्यं रसभावानुभावकं प्रवर्तत । अभिनवगुप्तानुसारेण—वाक्यसहचरितः शारीरोऽभिनयो वाक्यम् । तत्राभिनयेन वाक्येन च रसाभिव्यक्तिपरेण भवितव्यमित्यत्र विशेषः । न केवलो वाचिकोऽभिनयोऽपि तु शारीरिकोऽपि अभिनयस्तत्र स्यादेव ।

### सूचाभिनयः

भरतानुसारेण—

वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद् वाक्याभिनयः सूचेत्यभिसंज्ञिता ॥ २२.४५

---

१. यः पूर्वं शारीरोऽभिनयो बहुना प्रकारवैचित्र्येणोक्तः तस्यावान्तर सामान्याभिनयरूपा हि षड् भवन्तीति । स एव षडात्मकतयावान्तरजातियोगात् सात्त्विकवाचिकाभिनयैश्च सम्भूय क्रमतां प्राप्तैश्च व्यामिश्रतायां सामान्याभिनयः सम्पद्यते । ना. शा. २२.४२ अधिकृत्य अभिनवभारती ।

विप्रदासानुसारेण—आङ्गिकाभिनयेष्वेव पर्यवस्यन्ति सात्त्विकाः ।
वाचिकोपकृतस्तस्मादाङ्गिको मुख्य उच्यते ।

सूचाभिनये सात्त्विकाभिनयस्याङ्गिकाभिनयस्य च प्राथम्यं प्रवर्तते। एताभ्यां प्रथमं तावत् भावविघटनाक्रमः सूच्यते।[1] पश्चात् पूर्वोक्तो वाक्याभिनयः कार्यः। अभिनवगुप्तानुसारेण—तेन यैः सात्त्विकाङ्गिकैर्भावविवक्तव्यं सूच्यते, येषामन्तरोऽभिनयः प्रवर्तत एव सूचाभिनयः।

सूचाभिनये सत्त्वाभिनयस्याङ्गिकाभिनयस्य च सूचनाक्रमेण वाक्याभिनये ग्रहणं स्यात्।

## अङ्कुराभिनयः

भरतानुसारेण—

> हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः।
> सूचैवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः॥ २२.४६

अत्र किमपि वाच्यं प्रथममभिधाय पश्चात् तस्याभिप्रायं मनसि कृत्वाङ्गाभिनयः कार्यं। अभिनयकाले किमपि न प्रोच्यते। सत्त्वाभिनयस्य प्राधान्यं तु निर्विवादमेव।

अभिनवगुप्तो व्याख्याति—अन्यपरेऽपिवाक्ये यद् गर्भीभूतं हृदयस्थं वस्तु तन्निष्ठोऽभिनयोऽङ्गविकारैर्वचनशून्यैः सम्पादितः सूचातुल्यः सोऽङ्कुरो नाम शारीरः। यथा सागरिका—जाव अहं पि कुसुमाइं अवचाइअ कामदेवं पूजइस्सं—इत्यभिधायैतद्वाक्ये गर्भीभूतं कुसुमावचयमङ्गविकारैर्दर्शयति।

कुम्भानुसारेण—

> भूत - वाक्यार्थविषयमुपजीव्य प्रवर्तितः।
> चित्तवृत्त्यर्पकोऽङ्गानां व्यापारोऽङ्कुर ईरितः॥

विप्रदासानुसारेण—

> भूतवाक्यार्थमाश्रित्य चित्तवृत्त्यर्पणक्षमाः।
> दृष्टिप्रधाना व्यापाराः कथ्यन्तेऽङ्कुर संज्ञया॥

सात्त्वत्यामङ्कुरः प्रयुज्यते। भरतकोशे पृ० २४

---

१. अत एव सूचानाम्नः सार्थकता।

वेमभूपालानुसारेण—

> भविष्यदर्थानुगमाद्वाक्यार्थो वाक्यमेव वा।
> यस्त्वाङ्गैः सूच्यते पूर्वं वचनाभिनयस्ततः।
> सूचाभिनयनो नाट्ये वेदिभिः प्रतिपादितः॥

## शाखाभिनयः

भरतानुसारेण—

> यत्तु शिरोमुखजंघोरुपाणिपादैर्यथाक्रमं क्रियते ।
> शाखादर्शनमार्गः शाखाभिनयः स विज्ञेयः ॥ २२.४७

सत्त्वाभिनयमुपलक्ष्य क्रमशः (न तु युगपत्) शिरःप्रभृति पादं यावदङ्गैः योऽभिनयः क्रियते, स शाखाभिनयः प्रोच्यते । अत्र शाखादर्शनरीत्याभिनयः विधेयः ।[1]

शाखाभिनये करप्रधानो व्यापार आरभटी वृत्तिश्च इति विप्रदासो नियमयति ।

## नाटचायितम्

नाटचेन नाटचस्य योजनं नाटचायितं भवति । यदि नाम कस्मिंश्चित् प्रधाननाटकस्य मध्य उपचाराद् गौणनाटकं समावेश्यते तर्हि गौणनाटकस्याभिनयो नाटचायितमिति प्रोच्यते । गर्भनाटकाभिनयोऽत एव नाटचायितमेव ।[2] एतादृशेऽभिनये कश्चिन्नायकः स्वकीयं चरितमनुप्रेक्षते । एतन्नाटचरूपकनिष्ठं नाटचायितं भवति । एतदेव भारतीयकारिकया व्याख्यातम्—

> नाटचायितमुपचारैर्यः क्रियतेऽभिनयसूचया नाटचे ।
> कालप्रकर्षहेतोः प्रवेशकैः संगमो यावत् ॥ ना. शा. २२.४८

अपरविधं नाटचायितं कार्यान्तरनिष्ठं प्रोच्यते । तत्र ध्रुवाप्रयोगावसरे कश्चिन्नायको नर्तकस्य व्यापारे स्वीयं वृत्तं पश्यति । तदेतद् व्याख्यातं भरतेन—

> स्थाने ध्रुवास्वभिनयो यः क्रियते हर्षशोकरोषाद्यैः ।
> भावरस-सम्प्रयुक्तैर्ज्ञेयं नाटचायितं तदपि ॥

ना. शा. २२.४७

अभिनवगुप्तानुसारेण-अप्रयुज्यमानापि (ध्रुवा) काकतालीयेन प्रयोगमुपांशुरूपा नाटचमपि नाटचमिव शास्त इति तथाविधनाटचायितत्वापादकः शारीराभिनयो नाटचायितमिति ।

---

१. शाखा स्यान्नृत्यहस्तानां वैचित्र्यात्मविवर्तना: ॥
जायनः ।

२. गर्भे प्रच्छन्ना या कथा भवति सा गर्भनाटके प्रकाश्यते ।

## निवृत्त्यङ्कुराभिनयः

भरतानुसारेण—

यत्रान्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
तत्सम्बन्धार्थं कथं भवेन्निवृत्त्यङ्कुरः सोऽथ ॥ २२.५०

अभिनवगुप्तः व्याख्याति—बीजादेर्निवृत्तिं यथाङ्कुरः सूचयति, एवं निवृत्ते वाक्ये तदङ्कुरयति निवृत्त्यङ्कुरः उक्तः ।

यत्र पात्रद्वयस्य संवादमदृश्यं सदपरं पात्रं श्रुत्वा सत्त्वाभिनयं प्रकटयति, तत्र निवृत्त्यङ्कुरो भवति । रत्नावल्यां विदूषकवत्सराजयोः संवादं श्रुत्वा सागरिकाया यथाभूत-( संशयोत्कण्ठारागोदयजनितो ) व्यभिचारिसत्त्वयोजितः सत्त्वाङ्गोपाङ्गपरिस्पन्दो दृश्यमानो निवृत्त्यङ्कुरः ।

पूर्वोक्तेषु षड्विधेषु अभिनयेषु क्वचित्तात्कालिक-वाक्यानां क्वचिच्चातात्कालिकवाक्यानामुपजीवनमावश्यकमेवेति निर्धारयन् भरतः प्राह—

एतेषां तु भवेन्मार्गो यथाभावरसान्वितः । १२.५१

षड्विधेषु शारीराभिनयेषु द्वादशभिदः वाचिकाभिनया जुष्टा भवन्ति।

## वाचिकाः सामान्याभिनयाः

वाचिकाः सामान्याभिनया द्वादशविधा भवन्ति—आलापः, प्रलापः, विलापः, अनुलापः, संलापः, अपलापः, सन्देशः अतिदेशः, निर्देशः, उपदेशः, अपदेशः व्यपदेशश्च । एतेषां सर्वेषां सत्त्वभावमुपलक्ष्य प्रवर्तनं समीचीनम् । वाच्यार्थानां भेदेन इमे द्वादशभेदा जायन्ते । न तत्र वाचिकभिनयस्य बहुविशेषः, तथापि आलापादीनां प्रत्येकस्य कण्ठध्वनिर्भिन्न एव ।

### आलापः

युष्मदर्थं विषयमुपदेशादिशून्यं वचनमालापः ।

### प्रलापः

परस्परमसम्बद्धं मौर्ख्यादिवशादनर्थकं वचनं प्रलापो भवति ।

### विलापः

भरतानुसारेण विलापः करुणप्रभवो भवति । अत्र करुणस्तु दुःखमेव । तेन विप्रलम्भोऽपि गृह्यते ।

अनुलापः

एकस्यैव वाक्यस्य पुनः पुनर्वचनमनुलापो भवति।

संलापः

संलापस्तु वस्तुतः संवाद एवोक्ति प्रत्युक्ति संयुक्तो भवति।

अपलापः

पूर्वोक्तस्य वाचान्यथा करणमपलापो भवति।

सन्देशः

सन्देशो यथानामान्यस्मै श्रावणीयं वचनम्।

अतिदेशः

स्वकथनस्य वक्तुः कथनेन सहानुरूपतातिदेशो भवति।

निर्देशः

अहमेतत् कथयामीति निर्देशः।

व्यपदेशः

सत्यमपोहितुं मिथ्या प्रवर्तयितुं च वचनं व्यपदेशः। लोकस्यातिसन्धानं व्यपदेशस्य प्रयोजनम्।

उपदेशः

इदं कुरु गृहाणेति वचनमाज्ञार्थकमुपदेशो भवति।

अपदेशः

स्वकीयविचारस्यान्यमुखेन वचनमतिदेशो भवति।

भरतानुसारेण—

अन्यार्थकथनं यत् स्यात् सोऽपदेशः प्रकीर्तितः॥ २२.५९

एतेषां द्वादशभिदां वाचिकाभिनयानां पुरुष-( उत्तम-मध्यमान्य-) भेदेन काल-( वर्त्तमान-भूत-भविष्य- ) भेदेन च पुनरपि सप्तभेदा जायन्ते।

अनया रीत्या वाक्याभिनयस्य भेदाः कोटिशतानि अनेकानि प्रभवन्तीति भरतेनेङ्गितमधोलिखितकारिकया—

परेषामात्मनश्चैव कालस्य च विशेषणात् ।
सप्तप्रकारस्यास्यैव भेदा ज्ञेया अनेकधा ॥ २२.७१

'शङ्कुकानुसारेण ४०,००० तादृशा भेदाः सम्भवन्तीति मतमसत्' इति परिणमयन् अभिनवगुप्तः प्राह कोटिशतान्यनेकानि भवन्ति ।[1]

---

१. ना. शा. २२.७२ अधिकृत्य भारती ।

# नाट्यमण्डपः

नाटकमभिनेतुकामः सूत्रधारो नाटचमण्डपमपेक्षते ।[1] तत्र बहुविधा नाटचमण्डपा भवन्ति । तेषु बृहत्तरो ज्येष्ठः १०८ हस्ताः, मध्यमः ६६ हस्ताः, कनीयान् ३२ हस्ताश्चदीर्घा आसन् । नृपाणां राजप्रासाद-सविधे मध्यमकोटिको नाटचमण्डपो निर्मितः ।[2] सूत्रधारो यथोचितं नाटचमण्डपं प्रयोगार्थमचिनोत् । तेन विज्ञातमासीत्—

मण्डपे विप्रकृष्टे तु पाठ्यमुच्चरितस्वरम् ।
अनिस्सरण-धर्मत्वाद् विस्वरत्वं भृशं व्रजेत् ॥

ना. शा. २.१९

प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते ।
यावत् पाठ्यं च गेयं च तत्र श्रव्यतरं भवेत् ॥

ना. शा. २.२१

नाटचमण्डपस्य पश्चिमतमो भागो नेपथ्यगृहं भवति । तस्मात् पूर्वतो रंगो विलसति । रङ्गस्य शिरोभागो रंगशीर्षं मध्यभागश्च रंगपीठमिति प्रथितम् ।

स्थापत्कलासौष्ठवं तत्र रंगमण्डप-निर्माणे परिचीयते । यतो हि नाम भारतीयं विधानं वर्तते—

मन्दवातायनोपेतो निर्वातो धीरशब्दवान् ।
तस्मान्निवातः कर्तव्यः कर्तृभिर्नाटचमण्डपः ॥
गम्भीर-स्वरता येन कुतुपस्य भविष्यति ।

ना. शा. २.८१,८२

न केवलं श्रवण-सौविध्यमपि तु नेत्रपरितर्पणमपि प्रेक्षकाणां यथा-

---

१. अयं नाट्यमण्डपो बहुभिर्नामभिः प्रथितः प्रेक्षागृहम् (२.७), नाट्यवेश्म (२.४), रङ्गमण्डपः (२.६५) एवास्ति

२. देवालयानां प्राङ्गणेऽपि तत्रस्थदेवानां प्रीत्यर्थं नाट्याभिनयनाय नाट्यमण्डपो विरचितः । साधारणलोकानां कृते तु यत्र कुत्रचित् नाटचमण्डपोऽस्थायी कृतः ।

स्यात्तथा विधेयमासीद् नाट्यमण्डपे तत्र चित्रकर्मलताबन्धादिभिः रमणीया शोभा समुन्मीलिता ।[1]

## कक्ष्या-विभागः

कक्ष्या-विभागस्य भूमिकां वर्णयन्नभिनवगुप्तः प्राह—देशश्च जलस्थलादि बहुतर-समविषमादि स्वभेदसहितं काव्यर्थतामात्रेणैवेह सम्भवन्नपि प्रयोगस्थाने न सम्भवत्येवेति, तस्य परिहारार्थं कक्ष्यानिरूपणं कर्तव्यम् ।

प्रकरणेऽस्मिन् भरतेन सूचितं यत् केन विधिना नातिविस्तृते रंगपीठे चातुरश्रीयम् अन्तरङ्गपीठनामकं स्थानमावश्यकतानुसारमखिलब्रह्माण्डस्यापि प्रतिनिधीभूयाभिनेयार्थं प्रेक्षकाणां कृते समक्षयति ।[2]

रंगपीठे किं किं ज्ञेयमिति भरतः प्रपञ्चयति—

कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसरितस्त्वाश्रमा अटवी तथा ॥
पृथिवीसागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा ॥
अलोकश्चैव लोकश्च रसातलमथापि च ।
दैत्यनागालयश्चैव गृहाणि च वनानि च ॥

---

१. भित्तिष्वथ विलिप्तासु परिमृष्टासु सर्वतः ॥
समासु जातशोभासु चित्रकर्म प्रयोजयेत् ।
चित्रकर्माणि चालेख्याः पुरुषाः स्त्रीजनास्तथा ॥
लताबन्धाश्च कर्तव्याश्चरितं चात्मभोगजम् ॥

ना. शा. २.८४,८५

२. मण्डपस्य यो विशिष्टो भागोऽन्तरङ्गपीठात्मकस्तं विज्ञाय विभागतो ज्ञात्वा कक्ष्यागत्युपयोगिनं स्थान-विशेषं प्रयोजयेत्, विभागेन सम्बन्धं नयेत् । नाट्यदेशानुसारेण प्रकोष्ठे त्यक्ते यो देशोऽवशिष्यते तत्रैव चातुरश्रीयम् । अतएव वामदक्षिणभागयोः कुतप-विन्यासः । शिष्टे कक्ष्या-विभागः ।

ना. शा. १३.१ अधिकृत्य भारती ।

तेन भाण्डेन यत्परित आक्रान्तं तद्विवर्ज्यं शेषे रंगपीठदेशे निष्क्रमण-प्रवेश-गत्याद्युपयोगी स्थानविभागो निर्देश्यः प्रेक्षकावधिः संकमयितव्यः । ना. शा. १३.३ अधिकृत्य भारती ।

नगरे वा वने वापि वर्षे वा पर्वतेऽपि वा।
यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥

ना. शा. १३.४—७

अभिनवगुप्तानुसारेण यत्र-यत्र वार्ता वृत्तान्त इतिवृत्तबलायातः प्रकर्षेण वर्तते तत्र मध्ये यो देशविभागस्तमेव प्रवर्तयेत् रंगपीठे दर्शयेत् न सर्वमिति।

अभिनवगुप्तानुसारेण 'कविजन-स्मरणार्थं' भरतेन अन्तरंगपीठस्य त्रैलोक्य-प्रतिनिधित्वमभिहितम्। अनेन पुरा कवीनां नाटकेषु देश-विषयक-परिधिविधानं नासीदिति स्पष्टम्। योरपीयनाटकेषु संकलन-त्रय-('Three Unities') नामकः सिद्धान्त आदिकालतः प्रवर्तितः। भारते न तादृशं किमयवधारणं देश-विषये परिगणितम्।

रंगपीठे प्रधानभूता पूर्वं ये प्रविष्टा तेऽभ्यन्तरकक्ष्यामधितिष्ठन्ति। पश्चात् प्रविष्टानां तु स्थानं बाह्यकक्ष्या। तयोर्मध्ये मध्यमा कक्ष्या भवति, यत्रागत्य कश्चिज्जनः प्राक्प्रविष्टं पात्रं संगच्छते।[1]

तत्र नाटकेषु प्रकृतौ दैवयोनयो भवेयुः। तासां गमनागननं आकाश-गामिना विमानेन मायया वा अदर्शनरूपया, अन्याभिर्वा बलादाहरणादिक्रिया-भिर्विविधप्रयोजनाभिः कार्यम्।[2] एकस्मिन्नङ्के एकस्थानीयमेकदिवसीयं च कार्यं दर्शनीयम्।

अधोविधिना कक्ष्याविभागः प्रवर्तनीयः—

| | |
|---|---|
| १. यक्षाः गुह्यकाः, धनदानुचराः | हिमवत्प्रदेशे कैलासः |
| २. राक्षसाः, भूताः, पिशाचाः | हिमवत्प्रदेशः |
| ३. गन्धर्वाः, अप्सरसः | हेमकूटः |
| ४. शेषः, वासुकिः, तक्षकः | निषधः |
| ५. देवगणाः | महामेरुः |
| ६. सिद्धाः, ब्रह्मर्षयः | नीलः |
| ७. दैत्याः, दानवाः | श्वेतपर्वतः |
| ८. पितरः | शृङ्गवान् |

कक्ष्याविभागस्तु अस्वाभाविकत्वान्नाटचधर्म एव।

१. ना. शा. १३.९—१०
२. ना. शा. १३.१९—२०

# नृत्तम्

पूर्वरङ्गविधौ नृत्तस्य प्रथमं स्थानं विलसति। नृत्तमिदं नानाकरण-संयुक्तैरङ्गहारैर्विभूषितं भवति।

## करणानि

करणानि अष्टोत्तरशतं सन्ति। एतेषु प्रमुखतः हस्तपाद-विकल्पनं दृश्यते। प्रायः सर्वेषु करणेषु वामः करः वक्षःस्थितो विधीयते। दक्षिणः करः चरणानुरूपः क्रियते। हस्तपादानुसारिणी उरःपृष्ठोदर-कटिपार्श्वोरु-स्थितिर्लक्ष्यते। तेषां नाम्नैव प्रतीयते यत् करणैः नर्तकस्य हस्तपादादिभिः कृतः प्रायश आकृति-विशेषोऽपि लक्ष्येत। तद्यथा स्वस्तिकरेचितम्, लतावृश्चिकम्, गजक्रीडितम्, गरुडप्लुतकम्, गृध्रावलीनकम्, मयूरललितम् हरिणप्लुतम्, करिहस्तम्, विष्णुक्रान्तम् गङ्गावतरणमित्यादीनि तत्सम्बन्धि प्रतिरूपाणि।

## अङ्गहाराः

करणानां संयोगैः अङ्गहारो विधीयते। अङ्गहाराः द्वात्रिंशत् संख्यका भवन्ति। अङ्गानां देशान्तरे प्रापणप्रकारोऽङ्गहारः। हरश्चायंहारः प्रयोगः।[1]

## रेचकाः

रेचकाश्चतुर्विधा भवन्ति—पादरेचकः, कटिरेचकः, कररेचकः, कण्ठरेचकश्च।

## पिण्डी-बन्धः

पिण्डी-बन्धानां व्यञ्जना भवत्येवेत्याहाभिनवगुप्तः—भगवत एव प्राधान्यात् परितोषणीयतेति तस्याव्यक्तं यदीश्वरशब्दवाच्यं निर्विशेषं रूपं तस्य तादृश एव शिवलिङ्गाकृतिः पिण्डीबन्धः। पिण्डी आधाराङ्गादि-संघातः। तया बध्यते बुद्धौ प्रवेश्यते तनुभावेन सकलया वा व्योमादाविति पिण्डी-बन्ध आकृतिविशेषः। तस्यैकदेशाभिधानं पिण्डीति।

पिण्डीबन्धेनाभिव्यंजनीया देवाः सन्ति—

ईश्वरः (शिवः), नन्दी, चण्डिका, विष्णुः, स्वयम्भूः, शक्रः, मन्मथः, कुमारः, श्रीः, जाह्नवी, कुबेरः, बलरामः नागः, गणेश्वरः रुद्रश्च। तथा

१. ना. शा. ४.१९ अधिकृत्य भारती।

हि रुद्रस्य ।

त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्धकद्विषः । ४.२५८

नृत्तस्योपयोगः

मंगल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम् ।
विवाह-प्रसवावाहप्रमोदाभ्युदयादिषु ॥
विनोदकारणं चेति नृत्तमेतत् प्रवर्तितम् ।
ना. शा. ६.२६५–२६६ ।

पूर्वरङ्गे नृत्तस्य वैशिष्टयं प्रागेव सूचितम् ।

भरतानुसारेण नाटचाभिनयेऽपि कतिपयावसरेषु नृत्तस्य विनियोगो भवति । तथा हि—

अङ्गवस्तुनिवृत्तौ तु तथा वर्णनिवृत्तिषु ।
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् ॥
यत्तु संदृश्यते किञ्चिद्दम्पत्योर्मदनाश्रयम् ।
नृत्तं तत्र प्रयोक्तव्यं प्रहर्षार्थगुणोद्भवम् ॥
यत्र सन्निहिते कान्ते ऋतुकालादिदर्शनम् ।
गीतकार्थाभिसम्बद्धं नृत्तं तत्रापि चेष्यते ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
यस्मिन्नङ्गे तु युवतिर्न नृत्तं तत्र योजयेत् ॥
सखीप्रवृत्ते संलापे तथाऽसन्निहिते प्रिये ।
न हि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ॥
ना० शा० ४.३०५–३०९

यत्तु शृङ्गार-सम्बद्धं गानं स्त्रीपुरुषाश्रयम् ।
देवीकृतैरङ्गहारैर्ललितैस्तत् प्रयोजयेत् ॥ ४.३१२

## लास्याङ्ग-विधानम्

'लास्याङ्गानि नाटकोपयोगीनि' इति भरतः । तानि दशधा भवन्ति—गेयपदं, स्थितपाठ्यम्, आसीनं, पुष्पगण्डिका, प्रच्छेदकः, त्रिमूढं, सैन्धव, द्विमूढकम्, उत्तमोत्तमकम्, उक्तप्रत्युक्तं च ।

स एतेषां विवरणं न प्रस्तौति । भरतेन लास्याङ्गानि परिभाषितानि । तद्यथा—

गेयपदम्

आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् ।
गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥ १९.१२१

शुष्कमित्यनुकरणीयतया शून्यम् । गायनैरिति न तु पात्रैः । आसनोपविष्टैरिति न तु नेपथ्ये गीयते ।

स्थितपाठ्यम्

प्राकृते यद्वियुक्ता तु पठेदात्तरसं स्थिता ।
मदनानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते ॥ १९.१२२

आत्तरसमिति रसोपयोगि ।

आसीनपाठ्यम्

आसनमास्यते यत्र सर्वातोद्यविवर्जितम् ।
अप्रसारितगात्रं च चिन्ताशोकसमन्वितम् ॥ १९.११५

आसीनं पाठ्यं शोकस्य सहचरम् ।

'तत्र सुकुमारकाकलीप्रायप्रमदागीतमात्रावशेषः' इति अभिनवगुप्तः ।

पुष्पगण्डिका

नृत्तानि विविधानि स्युर्गेयं गाने च संश्रितम् ।
चेष्टाभिश्चाश्रयः पुंसां यत्र सा पुष्पगण्डिका ॥ १९.१२६

पुरुषाणां कृते स्त्रीपात्राणां पुष्पगण्डिकोक्तेति अभिनवगुप्तः ।

अत्र गाननृत्तगीतगतवैचित्र्ययोगात् मालासादृश्यात् पुष्पगण्डिका । तत्र स्त्री पुरुषमाश्रयते स्वचेष्टाभिः ।

प्रच्छेदकः

प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहताः ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ १९.१२९

चन्द्रातप इति ज्योत्स्ना तस्यां छाया सादृश्यकान्तस्य प्रहर्षार्थं विभूषितमिति । ज्योत्स्नेति उपलक्षणम् । मदिरायां वा दर्पणे सलिलेऽथवा नायकस्य छायां दृष्ट्वा विस्मृतव्यलीकाः सन्ति नायिकाः ।[1]

---

१. ना० शा० १९.१३१ अधिकृत्य भारती ।

## त्रिमूढकम्

अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलंकृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमिति स्मृतम् ॥ १९.१३०

त्रिमूढके कोमल-कान्त-पदावली शोभनवृत्तमलंकारनिष्ठता च त्रीणि वाग्वैशिष्ट्यानि सन्ति । तत्र काचिन्मुग्धा नायिका पुरुषवन्नटति ।

## सैन्धवकम्

पात्रं विभ्रष्टसंकेतं सुव्यक्तकरणान्वितम् ।
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥ १९.१३१

सैन्धवके सैन्धवप्राकृतभाषया नायिका गायति, यदा नायकः संकेतस्थले न संगच्छते । करणमिति वीणावाद्यादि ।

## द्विमूढकम्

मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम् ।
श्लिष्टभावरसोपेतं वैचित्र्यार्थं द्विमूढके ॥ १९.१३२
न पाठ्यं स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः ।
मुखप्रतिमुखोपेतं तथा चाचपुटाश्रयम् ॥ ३१.३६०

द्विमूढके द्वयोर्नायिकस्य नायिकायाश्च नायिकयोर्वा मोहो व्यावर्ण्यते । अत्र च मनागपि पाठ्यं न कार्यम् । नाभिनयप्रधानम्, अपि तु परिवृत्तिप्रधानमिति । तत् त्रिमूढकमेव हि तालकाव्यवशात् स्वल्प-शरीरं द्विमूढकमिति अभिनवगुप्तः ।[1]

## उत्तमोत्तमकम्

उत्तमोत्तमकं विद्यादनेकरससंश्रयम् ।
विचित्रैः श्लोकबन्धैश्च हेलाहावविचित्रितम् ॥ १९.१३४
उत्तमोत्तमके त्वादौ नर्कुटं सम्प्रयोजयेत् । ३१.३६२
श्लोकं विचित्रार्थपदं तथा चैवोपपादयेत् ।
ततश्च वस्तुकं कार्यमपरान्तकशाखया ॥ ३१.३६३
उत्तमोत्तमकं प्रोक्तं हेलावृत्तिविभूषितम् ॥ ३१.३६४

---

१. ना० शा० १९.३६०-३६२ अधिकृत्य भारतीमनुसृत्य ।

अभिनवगुप्तानुसारेणोत्तमानि तावल्लास्याङ्गानि, तेषामपीदमुत्तमम् ।[१] स्थायिनां बहुत्वनूतनत्वाद् घटनादिविचित्रमुक्तम् ।[२]

कोपप्रसादजनितं साधिक्षेपपदाश्रयम् ।
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् ॥ १९.१३५
यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥ १९.१३६
दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावांस्तद्वै भाविकमुच्यते ॥ १९.१३७

सर्वविधरूपकेषु लास्याङ्गानामुपयोग इति विशदयन्नभिनवगुप्तः प्राह—

अलौकिककैशिक्युपयोगिरसांशे सर्वथोपकारि यद् वैचित्र्यं तल्लास्याङ्गद्वारेण। स्वकार्यं तच्च सर्वं दशभिरेव संगृहीतम् । तथा हि—प्रधाने चित्तवृत्त्यंशे वा वैचित्र्यं विभावाद्यंशे वा उपरञ्जकभावे वा । तत्र विभावांशगतं तु वैचित्र्यं सैन्धवकात् काक्वाद्यंशे, स्थितपाठ्याल्लक्षणगुणाद्यंशे, त्रिमूढकादनुवृत्तांशे, पुष्पगण्डिकात आहार्ये, उपरञ्जकगीतातोद्ययोजने च, सात्त्विक आसीनपाठ्यात्, उपरञ्जकभावेऽपि निःशब्दाद्, ध्रुवागानभागे सर्वातोद्ययोगे च गेयपदात्, गीतार्थस्य पात्रे करुणार्थाभिनये उक्तप्रत्युक्ताद्वाचिकस्य, स्वरतालानुसरणात् द्विमूढकात् । तत एवाङ्गिकवैचित्र्यमपि व्यभिचार्यंशे तु वैचित्र्यमुत्तमोत्तमकात् ।[३]

लास्याङ्गानि तु नाट्योपयोगीनि, न तु नाट्याङ्गानीति अभिनवगुप्तेन सम्यग् व्याख्यातम् ।[४]

## वाद्य-विधानम्

भाण्ड-विन्यासो वा कुतप-विन्यासो वा पूर्वरङ्गस्य प्रत्याहार-नामको भेदः । भरतानुसारेण तत्रोपविष्टे प्राङ्मुखे रङ्गे कुतप एव विन्यासः कर्तव्यः । तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतप-विन्यासः कार्यः । तत्र रंगाभिमुखो मौरजिकः (मार्दङ्गिकः) तस्य पाणविक-दर्दरिकौ वामतः । तत्रोत्तराभिमुखो

१. ना० शा० १९.१३४ अधिकृत्य भारती ।
२. तत्रैव ।
३. ना० शा० १९.१३७ अधिकृत्य भारती ।
४. ना० शा० १९.११७ अधिकृत्य भारती ।

गायकः। गायकस्य तु वामपार्श्वे वैणिकः। वैणिकस्य दक्षिणेन वंशवादकौ। गातुरभिमुखं गायिका।[1]

स्त्री-बाल-मूर्खाविकीर्णे च रङ्गे कुतूहल-जनन समर्थवाद्यमुपपन्नं भवति।[2] पूर्वरङ्गस्य विविधेष्वङ्गेषु बहुविधंवाद्यं नियोजनीयमेव।[3] किं विधं वाद्यं कस्यामवस्थायां प्रयोज्यमिति भरतोऽधोविधं प्रपञ्चयति—

धंधंधेधेटं इत्येवं वाद्यं प्रयोक्तव्यम्।
रथविषमादिगतमङ्गुलिप्रचलनकृतं विहितम्॥
त्वरितगमनेषु भावा ये पूर्वोक्ता गतिप्रचारेषु।
ध्रं घें घें घें प्रायं तत्र तु वाद्यं प्रयोक्तव्यम्।
नौरथविमाननेपथ्यानिलाकाशजेऽङ्गुलीचलनात्
कार्यं हि तच्चतुष्केऽप्यन्योन्यसमाश्रितं वाद्यमिति॥
दुःखार्दितव्याधितेष्टजनवियोगविभवनाशवधबन्धः।
व्रतनियमोपवासादियुक्तेष्वाविद्धमार्गबन्धो विधातव्यः॥
दैत्यदानवयक्षराक्षसपन्नगादीनां धंद्रांधंद्रांधकुताम्।
धेधेटा प्रायं खञ्जविकलपङ्गुवामनादीनाम्॥
ट घटाघे चेटकुसत्त्वादीनां थोकटखुखणेत्यादिकम्।
यतिपाशुपतशाक्यादीनां धहुधहुधेधे प्रायम्॥
औपस्थापक-निमुण्डवर्षवरादीनां
घेटां घोंटां मांटांण्णाणाप्रायम्।
वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां
खों ध्रो धो खो खो इति प्रायम्॥ ना० शा० ३४.२२७-२३४
गजवाजिखरोष्ट्ररथविमानयानेषु वंकिटिप्रायम्॥

सर्वत्रोत्तममध्यमाधमेषु पुरुषेष्वित्थं रसभावानभिसमीक्ष्य वाद्यं प्रयोक्तव्यम्।

स्त्रीणां वाद्यं भरतेन तत्राग्रे वर्णितम्।

---

१. ना० शा० ३४.२१५।

२. ना० शा० ३४.२२२।

३. नान्दी—शुष्कावकृष्टासु करणाश्रितं वाद्यं योज्यम्। रङ्गद्वारे प्ररोचनायां जर्जरे, त्रिगते चार्यां चाङ्गितमार्गाश्रितं सन्निपातग्रहं प्रयोक्तव्यम्। महाचार्यां वितस्तिमार्गाश्रितं प्रदेशिनीग्रहम्। ना० शा० ३४.२२४

सामान्यतोऽभिनये भयशोकक्रोधादयो हि भावा आसां स्त्रीणां समुत्पद्यन्ते। आसामपि रसभावाभिनयापेक्षं मार्गाश्रितं वाद्यं भवति ।[1]

भरतो नाट्यप्रयोगे वाद्यस्य माहात्म्यमनुदर्शयति—

वाद्ये तु यत्नः प्रथमं तु कार्यः
शय्या हि नाट्यस्य वदन्ति वाद्यम् ।
वाद्ये च गीते च हि सम्प्रयुक्ते
नाट्यप्रयोगो न विपत्तिमेति ।। ३४.३०४

अभिनवगुप्तो नाट्यस्यार्थबोधे संगीतस्योपयोगं निदर्शयन्नाह—

गीतातोद्याभ्यां रामरावणादिविशेषास्पर्शनेनैव रसभावचर्वणौचित्यमाधीयते साम्यं च यतो भवन्ति सर्वाः सिद्धयः इति ।

रङ्गपीठेऽदृष्टमपि यद् व्यज्यतेऽभिनयेन, तस्य प्रथमरूपं वाद्यप्रयोगेषु वर्तते ।

'गजवाजिखरोष्ट्ररथविमानयानेषु वंकिटि प्रायम्'

इत्यनेन ज्ञायते यत् वंकिटिप्रायेणवाद्येन गजवाजिनां सम्प्रचारः प्रतीयते ।

भरतानुसारेण अभिनयकाले प्रायो निरन्तरमेव संगीतं प्रवर्तयेत् । तथा हि—

एवं गानं च वाद्यं च नाट्यं च विविधाश्रयम् ।
अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः ।। २८.७

त्रयोऽप्येते समूहा एकीभावं नेयाः ।

अन्यच्च

चत्वारः पणवाः कार्या दशरूपविधौ पुनः ।
आतोद्यान्यपि तान्येव नानावस्थासु वादयेत् ।। ३४.२९४
नाटके सप्रकरणे भाणे प्रहसने तथा ।
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत् ।। ३४.२९५

भरतो नाट्याभिनये वाद्यस्याद्यन्तयोजनां निरूपयति ।[2] वाद्यानि रसभाव-प्रयोगानुरूपाणि विधेयानि । सर्वाणि वाद्यानि उत्सवे, नृपाणां प्रयाणे,

१. ना० शा० ३४.२३६ ।
२. एवमेतेन विधिना कर्तव्यं बुधैः ।

मंगलोत्सवे, शुभकल्याणयोगे, विवाहकरणे, उत्पाते, सम्भ्रमे, सङ्ग्रामे, पुत्र-जन्मनि च प्रयोज्यानि । उद्यान-गमनादिषु अल्पं वाद्यं भवेत् । वीर-रौद्रादि-प्रधानानि रूपकाणि उत्थानकाव्यानि सन्ति । तेषामभिनये सर्वातोद्यानि प्रयोज्यानि सन्ति । त्रिपुष्करं नाम वाद्यं विश्रामहेतोः शोभार्थं भवति ।[1]

भरतो रसानुरूपान् वाद्य-मार्गान् निर्दिशति । तथा हि—

| रसाः | वाद्यस्य निर्दिष्टमार्गाः |
|---|---|
| १. शृङ्गार-हास्ययोगे | अड्डितो मार्गः |
| २. वीराद्भुतरौद्राणां योगे | वितस्त-मार्गः |
| ३. करुणरसे | आलिप्तकरणमार्गः |
| ४. बीभत्स-भयानकयोः | गोमुखी मार्गः |

एवमेव व्यभिचारिभावादि-विषयेऽपि वाद्यानि प्रयोज्यानि ।[2]

आङ्गिकाभिनयो गीतवाद्यप्रमाणेन विधातव्यः इति भरतोऽवोविधं निर्दिशति—

यद्वृत्त तु पदं गाने तादृशं वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टितम् ॥ ३४.१८३

नृत्ताङ्गहारानुसारि वाद्यं च भवति—

यो विधिर्गानवाद्यानां पदाक्षरलयान्वितः ।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोक्तृभिः ॥ ३४.१८९

## ध्रुवा-प्रयोगः गीतञ्च

यथा वर्णादृते चित्रं न शोभोत्पादनं भवेत् ।
एवमेव विना गानं नाट्यं रागं न गच्छति ॥
ना. शा. ३२.४२५

भरतानुसारेण गति-विभ्रमं दृष्ट्वा ध्रुवा कर्तव्या । तथा हि

रथपत्रवाजिवारण-विमान-शिबिकास्थ-पक्षियानेषु ।
द्रुतपदवर्णावर्णैः कर्तव्या तु ध्रुवा तज्ज्ञैः ॥ ३२.३७२

---

१. ना० शा० ३४.१७--२१ ।
२. ना० शा० ३४.६३—६५ ।

अर्थात् रथादीनां यानानामभिनयावसरे प्रथमं तावत् द्रुतवर्णा गीतिः भंवेत् । ईदृशी ध्रुवा प्रयोक्तव्या ।

अन्यच्च—

यद्वृत्तौ वाहनगतौ ध्रुवापादो विधीयते ।
तद्वृत्तं तु भवेद्वाद्यमङ्गवाद्य-समं तथा ॥ ३२.३७७
आकाशपुरुषो यत्र यत्र चाकाश-भाषणम् ।
अन्वर्था तत्र कर्तव्या ध्रुवा ह्याभाष-संश्रिता ॥ ३२.३८०
प्रासादिक्याश्रया चापि ह्रीर्ष्याक्रोधाश्रयापि वा ।
शृङ्गाररसमासाद्य ध्रुवान्वर्था प्रयोगतः ॥ ३२.३८१
यानि प्रासादिकानि स्युः स्थानानि रससंश्रयात् ।
अन्वर्था तत्र कर्तव्या ध्रुवा प्रासादिकी तथा ॥
भाषां तु शौरसेनीं हि ध्रुवाणां सम्प्रयोजयेत् ।
यद्यपि मागधी यत्र कर्तव्यं नर्कुटं तथा ॥ ३२.३८३
दिव्यानां संस्कृतं गानं प्रमाणैस्तु विधीयते ।
अर्धसंस्कृतमेव तु मानुषाणां प्रयोजयेत् ॥ ३२.३८४

अन्यत्र

पूर्वरङ्गे प्रयुक्ते तु नाट्याचार्यसमाश्रये ।
ध्रुवा तत्र प्रयोक्तव्या प्रकृतीनां प्रवेशजा ॥ ३२.४०३

सेयं ध्रुवा नाट्यं प्रकाशयतीति भरत आह—

तथा रसकृता नित्यं ध्रुवाः प्रकरणाश्रिताः ।
नक्षत्राणीव गगनं नाट्यमुद्योतयन्ति ताः ॥

ना. शा. ३२.४३०

## सन्धिषु गान-विधानम्

भरतानुसारेण सन्धिषु गानस्य शास्त्रीय-योजना कर्तव्या ।[१] तथा हि—

| | |
|---|---|
| मुखसन्धौ | मध्यमो ग्रामः |
| प्रतिमुखसन्धौ | षड्जः |
| गर्भसन्धौ | साधारितः |
| अवमर्श-सन्धौ | पञ्चमः |
| निर्वहण-सन्धौ | कैशिकम् । |

१. ना. शा. ३२.४२८, ४२९

## पात्र-परिकल्पनम्

न केवलं मनुष्या, देव-दैत्यदानव-यक्षराक्षसादय अपि तु पशु-पक्षि-श्वापदादयोऽपि रंगपीठे मानवैरेवपात्रीभूय प्रतिनिधीकरणीया:।[1] पशुपक्षिरूपेण कथं रंगे प्रविशतीति भरतो निदर्शयति—

एते चान्ये च बहवो नानारूपा भवन्ति ये।
आचार्येण तु ते कार्या मृत्काष्ठजतुचर्मभिः ॥२६.४

अर्थात् तेषां मृद्रूपाणि क्रियन्ते।

कश्चिन्मानवो वा नटो वा रंगे वर्णकैर्भूषणै राजरूपधरो भवति। अनेन प्रकारेण तस्य परभावः सिध्यति।

साधारणनियम आसीत्—

स्त्रियो हि स्त्रीगतो भावः पौरुषः पुरुषस्य च ॥ २६.१३

केवलं स्त्रीपात्राणि क्वचित्

सुकुमार-प्रयोगो यो राज्ञामामोदसम्भवः।
शृङ्गाररसमासाद्य तन्नारीषु प्रयोजयेत् ॥ २६.९

अनुरूपा प्रकृतिः—

यथावयो यथावस्थमनुरूपेति सा स्मृता।

तत्र पुरुषस्य भूमिकायां समानवयस्कः पुरुष इति।

रूपानुरूपा—

यदा पुरुषभावे स्त्री तथा स्त्रीभावे पुरुषो रंगेऽवतरति तदा रूपानुरूपा प्रकृतिर्भवति।

छन्दतः पौरुषीं भूमिं स्त्रीकुर्यादनुरूपतः ॥ २६.१५

देव-पार्थिव-सेनापति-मुख्यपुरुष-भवनेषु स्त्रीजनकृताः प्रयोगा भवन्ति। रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम्।[2] भरतः पुनः स्पष्टयति नाटकादि-विषये—

स्त्रीणां तत्तु प्रयोजयेत्। २६.२९७

---

१. मृत्काष्ठादिनिर्मित बाहुवक्त्रादिरपि। ना० शा० २६.४
अधिकृत्य भारती।
२. ना० शा० २६.२०।

सुकुमार-प्रयोगेषु नाटक-प्रकरण-भाण-वीथ्यङ्केषु स्त्रिय एव पात्राणि स्युः। शेषेषु आविद्ध-रूपकेषु पुनः युद्ध-संरम्भादिपूर्णेषु पुरुषपात्राणि नियोज्यानि। तत्र डिम-समवकार-व्यायोगेहामृगादिषु पुरुषाः सन्तु।

पात्राणां साधारणगुणा भरतेनोदिताः—

बुद्धिमत्त्वं सुरूपत्वं लयतालज्ञता तथा।
रसभावज्ञता चैव वयःस्थत्वं कुतूहलम्॥
ग्रहणं धारणं चैव गात्रावैकल्यमेव च।
निजसाध्वसतोत्साह इति पात्रगतो विधिः॥

ना० शा० २७.९९.१००

## भूमिका-विन्यासः

नाट्याभिनये बहुविधप्रकृतीनां भूमिकायां पात्राणि रङ्गेऽवतरन्ति। कीदृशं पात्रं कस्य भूमिकायामवतरत्विति निर्धारणार्थं पात्राणां गतिः, वाक्, चेष्टा, सत्त्वं, शीलं, स्वभावः इत्येतानि परीक्षणीयानि। गुणानुसारिणी पात्रभूमिका अधोनिर्दिष्टा—

| प्रयोज्यः | गुणविशेषान्वितं पात्रम् |
|---|---|
| १. देवः | अङ्ग-प्रत्यङ्ग संयुक्तं, अहीनाङ्गं, वयोन्वितं, न स्थूलं, न कृशं, न दीर्घं, न मन्थरं, श्लिष्टाङ्गं, द्युतिमन्तं, सुस्वरं, प्रियदर्शनं च। |
| २. राक्षसः, दानवः, दैत्यः | स्थूलं, प्रांशु, बृहद्देहं, मेघ-गम्भीर-निस्वनम्, रौद्रस्वभावनेत्रं, स्वभाव-भ्रुकुटीमुखम्। |
| ३. कुमारः, राजा च | सुनेत्र-सुभ्रुवः, स्वङ्गा, सुललाटाः, सुमुखाः, सुकण्ठाः, सुशिरोधराः, स्वङ्ग-प्रत्यङ्ग-संयुक्ताः, न दीर्घाः, न मन्थराः, न स्थूलाः, न कृशाः, स्वभावेन व्यवस्थिताः, सुशीलाः, ज्ञानवन्तः, प्रियदर्शनाश्च नरोत्तमाः। |

| | |
|---|---|
| ४. सेनापतिः, अमात्यश्च | अविकलैरङ्गैः धीरं, वसनकर्मणि स्फुटं, न दीर्घं, न स्थूलम्, ऊहापोह-विचक्षणम्, अदीनं, प्रगल्भं, प्रत्युत्पन्न-विनिश्चयम् । |
| ५. कञ्चुकी, श्रोत्रियः | पिङ्गाक्षं, घोणनासम् ।[1] |
| ६. दासः | मन्थरं, वामनं, कुब्जं, विकृतं विकृताननं, विष्टब्धनेत्रं, काणाक्षं, स्थूलं, चिपिट-नासिकं, दुर्जनं, दुःस्वभावं, विकृता-चारं च । |
| ७. तपस्वी | अतिकृशं, क्षामं च । |

इयं सूची तु संक्षिप्तैव । भरतानुसारेणान्यासु भूमिकासु देशवेषानुरूपाणि पात्राणि योज्यानि ।

## गायक-वादकादीनां गुणाः

भरतो न केवलं गायने वादने च सौष्ठवं द्रष्टुकामोऽपि तु गायके वादके चापि तस्य सौष्ठव-विधानं साधु मनुते । तथा हि—

### गायकः

प्रत्यग्रवयाः, स्निग्धः, मधुरस्वरोपचितकण्ठः, लय-ताल-कलावाप-प्रमाणज्ञः ।

### गायिका

रूपगुणकान्तियुक्ता, माधुर्योपेत-सत्त्वसम्पन्ना, पेशल-मधुर-स्निग्धानुनादिसम-रक्तशुभकण्ठा, विहितगमक-विधायिनी, काललयकुशला, आतोद्यार्पितकर्णा, श्यामा च ।

### वीणा-वादकौ

स्फुटरचित-चित्रकरणौ, गीतश्रवणाचलौ, प्रवीणौ, चित्रादि-वाद्यकुशलौ च ।

### वंशवादकः

बलवानवहितबुद्धिर्गीतलयज्ञ, सुसंगीतः, श्रावक-मधुर-स्निग्धो दृढपाणिः ।

---

१. कुटिला नासा यस्य तत् ।

**संगीताचार्यः**

आचार्यस्य षड्गुणा भरतेन परिगणिताः—

१. ज्ञानम्—शास्त्रावबोधः ।
२. विज्ञानम्—क्रियासम्पादनम् ।
३. करणम्—कण्ठहस्त-गौण्यम् ।
४. वचनम्—वचनस्य स्मृतिः ।
५. प्रयोगसिद्धिः—देशादि-सम्पदाराधनम् ।[1]
६. निष्पादनम्—शिष्यबुद्धिमनुसृत्यविद्यादानं च ।

**मृदङ्गी**

स्वभ्यस्तकरणः साम गीतज्ञो गुणितग्रहः ।
सुसंगीत-प्रयोगज्ञो मृदङ्गी तु भवेद् गुणैः ॥ ३४.२९९

**पाणविकः**

भ्रान्तोर्ध्वहस्तः कालज्ञश्छिद्रावरणपण्डितः ।
अभ्यस्तकरणैश्चैव भवेत् पाणविको गुणैः ॥ ३४.३००

**दर्दरी**

निश्चलो निपुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवादी च दर्दरी तु प्रशस्यते ॥ ३४.३०१

## श्रावण-गुणाः

भरतानुसारेण श्रावणः घनः, स्निग्धः, मधुरः, अवधानवान्, त्रिस्थान-शोभी च भवेत् । ते इमे गुणा वस्तुतः कण्ठस्य सन्ति । तत्र घनः सुस्वरः, स्निग्धः अरुक्षध्वनि-संयुक्तः, मधुरस्तु मनः प्रह्लादनकरः, अवधानवान् अधिके हीने च स्वरे सावधानश्च भवति । त्रिस्थान-शोभी तु शिरःकण्ठमुखेषु गतो माधुर्यं लभते ।[2]

श्रावणस्य पञ्चदोषाः सन्ति—कपिलः, अव्यवस्थितः, सन्दष्टः, काकी, तुम्बकी च । तत्र कपिले वैस्वर्यं, श्लेष्मकण्ठः, घर्घरायितं च भवन्ति । अव्यस्थिते

१. ना० शा० ३३–११ ।
२. ना० शा० ३३.१२–१५ ।

स्वराणामधिकता ऊनता च भवतः। सरूक्षदोषहतो भवति। सन्दष्टो दन्तयन्त्र-सन्दंशाद् भवति। काकी स्वरः रुक्ष एवोच्चारणस्थाने न विस्तरति। तुम्बकी-स्वरः नासाग्रेऽवरुध्यते।[1]

## चारीसम्पादनायाङ्ग सौष्ठवम्

चार्यर्थं पात्राण्यधिकृत्य भरतो नियमयति—

**शोभा सर्वैव नित्यं हि सौष्ठं समुपाश्रिता।**
**न हि सौष्ठव हीनाङ्गः शोभते नाटचनृत्तयोः॥**

अर्थात् पात्रस्य सौष्ठवविशिष्टानि अङ्गानि भवेयुः।

सौष्ठवविभूषितं शरीरं भरतानुसारेण अचञ्चलम्, अकुब्जम्, सन्नतगात्रं, नात्युच्चं च भवेत्। कथं नाम शरीरस्य सौष्ठवं परीक्षणीयमिति भरतो नियमयति—

**कटी-कर्णसमा यत्र कूर्पं रांशशिरस्तथा।**
**समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत॥ १०.९२**

शरीरस्य सौष्ठवं केन प्रकारेण प्रसाधनीयमिति भरतो निदर्शयति—

**तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च।**
**व्यायामं कारयेद् धीमान् भित्तावाकाशिके तथा॥**
**भित्तौ प्रसारिताङ्गं तु व्यायामं कारयेन्नरम्।**
**बलार्थं च निषेवेत नस्यं वस्तिविधिं तथा॥**
**स्निग्धान्यन्नानि च तथा रसकं पानकं तथा।**
**आहाराधिष्ठिताः प्राणाः प्राणे योग्याः प्रतिष्ठिताः॥**
**अचलैर्मधुरैर्गात्रैश्चतुरश्रेण वक्षसा**
**व्यायामं कारयेद् धीमान् नरमङ्गक्रियार्थिनाम्।**

## कर्म-विधानम्

क्वचिल्लौकिककर्मवत् नाटचकर्म न भवतीति विशदयन् भरतो निर्दिशति—

**न भेद्यं नैव च च्छेद्यं न प्रहर्तव्यमेव च।**
**रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत्॥**

---

१. ना० शा० ३३.१६–२०।

अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा ।
शस्त्रमोक्षः प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ।।

ना० शा० २१.२२४–२२५

## अभिसरण-विधानम्

समदा मृदुचेष्टा च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद् वेश्याङ्गना शनैः ।।
संलीना स्वेषु गात्रेषु त्रस्ता विनमितानना ।
अवगुण्ठन-संवीता गच्छेत्तु कुलजाङ्गना ।।
मदस्खलित-संलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत् प्रेष्या समुद्धतम् ।।

ना० शा० २२.२२७–२२९

## प्रिय-प्रबोधनम्

| | |
|---|---|
| कुलजा | अलङ्कार-शब्देन |
| वेश्या | शीतलैः गन्धैः |
| प्रेष्या | वस्त्रव्यजनैः[1] |

## वासोपचारः

गन्धमाल्ये गृहीत्वा तु चूर्णवासस्तथैव च ।
आदर्शो लीलया ग्राह्यश्छन्दतो वा पुनः पुनः ।।
वासोपचारे नात्यर्थं भूषणग्रहणं भवेत् ।
रसना नूपुरप्रायं स्वनवच्च प्रशस्यते ।। २२.२३८–२३९

## अभिवादन-विधानम्

सव्योत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत् ।। ७३
नरेऽभिवादनं ह्येतदप्रत्यक्षे विधीयते
खटकावर्धमानेन कपोताख्येन वा पुनः ।।२५.७४
दैवतानि गुरुंश्चैव प्रमदाश्चाभिवादयेत् ।।
दिवौकसश्च ये पूज्याः प्रत्यक्षाश्च भवन्ति ये ।

१. ना. शा. २२.२३१

## पाठ्य-विशेषाः

### स्वप्नायितम्

सुप्तः पुरुषः यदि किञ्चिद् वदति तस्याभिनयो हस्तसंचारं विना विधेयः। अन्यच्च तत्र—

मन्दस्वरसञ्चारैर्व्यक्ताव्यक्तं पुनरुक्तवचनार्थम्।
पूर्वानुस्मरणकृतं कार्यं स्वप्नायिते पाठ्यम्॥ २५.९६

### मरणकाले काकुः

प्रशिथिलगुरुकरुणाक्षरघण्टानुस्वरित-वाक्यगद्गदजैः।
ना० शा० २५.९७

### बालानां पाठः

असमाप्ताक्षरं चैव बालानां कलस्वनम्।
ना० शा० २५.९९

### जनान्तिकपाठः

कार्यवशादश्रवणम् हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः।
अव्यभिचारेण पठेत्।
२५५.९३,९४

## गीत-विधानम्

यत्राभिनेयं गीतं स्यात्तत्र वाद्यं न योजयेत्।
अङ्गहारप्रयोगे तु भाण्डवाद्यं विधीयते॥ ४.२७६

## विशेषलक्षणानि

### देवानाम्

नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः॥
नित्यमेव सुखः कालो देवानां ललिताश्रयः।
न चेर्ष्या नैव च क्रोधो नासूया न प्रसादनम्॥
ना० शा० २२.३२४,३२५

## अभिनय-वेला

| कालः | प्रयोज्यं रूपकम् |
|---|---|
| १. पूर्वाह्णे | श्रोत्ररमणीयं, धर्मोत्थानकृतं च। |
| २. अपराह्णे | सत्त्वोत्थान–गुणैर्युक्तं वाद्यभूयिष्ठं पुष्कलं, सत्त्वयुक्तं च। |
| ३. प्रदोषे | कैशिकीवृत्ति-संयुक्तं, शृंगार-रस-संश्रयम्, नृत्तवादित्रगीताढ्यम् च। |
| ४. प्रभाते | नर्महास्यबहुलम्, करुणप्रायम्, निद्रा-विनाशनम्। |

मध्याह्नेऽर्धरात्रेऽपि नाट्याभिनयः प्रयोज्य आसीत्। केवलं सन्ध्यायां भोजनकाले च नाट्याभिनयो वर्जितः।[1]

भर्तुराज्ञया यस्मिन् कस्मिन् कालेऽपि नाट्यं प्रयोज्यमासीत्।[2]

## सङ्केत-ग्रहणम्

बहूनां वस्तूनां बोधाय तेषां रंगपीठे उपस्थितिः नावश्यकी। केवलं सांकेतिकभावेन तेषामुपस्थितिः बोध्यते। तथा हि भरतः—

अंकुशग्रहणान्नागं खलीनग्रहणाद् हयम्।
प्रग्रहग्रहणाद् यानमेवमेवापरेष्वपि ॥
अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ॥ १३.१०७,१०८

## आभ्यन्तरं बाह्यं च नाट्यम्

दीक्षिताः शिक्षिताश्च जना अभ्यन्तराः सन्ति।[1] तादृशानां नटानां नाट्यमाभ्यन्तरनाट्यं प्रोच्यते। तद्विपरीता बाह्या अदीक्षिता अशिक्षिता जना भवन्ति। तादृशानां नटानां नाट्यं बाह्यमिति प्रोच्यते। भरत आभ्यन्तरं बाह्यं च नाट्यं विशदयति।

---

१. अर्धरात्रे नियुञ्जीत समध्याह्ने तथैव च।
सन्ध्याभोजनकाले च नाट्यं नैव प्रयोजयेत्॥ २७.९५

२. अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः।
यथैवाज्ञापयेद् भर्ता तदायोज्यमसंशयम्॥ २७.९७

## आभ्यन्तरं नाटचम्

अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितम् ।
लय-ताल-कला-पात-प्रमाण-नियतात्मकम् ॥
सुविभक्तपदालापमनिष्ठुरमकाहलम् ।
यदीदृशं भवेन्नाट्य ज्ञेयमाभ्यन्तरं तु तत् ॥ २२.७५,७६
लक्षणाभ्यन्तरत्वाद्धि तदाभ्यन्तरमिष्यते । २२.७८

## बाह्यं नाटचम्

एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ।
अनिबद्ध-गीत-वाद्यं नाट्य बाह्यमिति स्मृतम् ॥
शास्त्र-बाह्यं भवेद्यत्तु तद्बाह्यमिति भण्यते ॥ २२.७७,७८

भरतो बाह्यनटान् परिचाययति—

अनाचार्योषिता ये च ये च शास्त्र-बहिष्कृताः ।
बाह्यं प्रयुञ्जते ते तु न ज्ञात्वाचार्यकी-क्रियाम् ॥ २२,८०

अभिनवगुप्तानुसारेण बाह्यं नाटचं रसानुप्राणितं न सम्पद्यते। बाह्यं नाटचं तु अधुनातनरामलोलावद् ग्रामीणानां भवति ।

---

१. अभ्यन्तरः—Initated in, skilled or proficient in, familiar or conversant with, Apte : Sanskrit-English Dictionary.

## संस्कृतपरिषदः प्राप्यपुस्तकानि



| ● डा० रामजी उपाध्यायेन रचितानि सम्पादितानि च | मूल्यम् |
|---|---|
| १. संस्कृत साहित्य का आलोचनात्मक इतिहास ( प्रथमो भागः ) | रु० १२.०० |
| २. संस्कृत साहित्य का आलोचनात्मक इतिहास ( द्वितीयो भागः ) | रु० १०.०० |
| ३. मध्यकालीन संस्कृत नाटक, पृ० सं० ५२० | रु० २५.०० |
| ४. आधुनिक संस्कृत नाटक—भागद्वयं, पृ० १३५० | रु० ६०.०० |
| ५. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका (डी० लिट्० थीसिस) | रु० २००.०० |
| ६. Sanskrit & Prakrit Mahākāvyas (D. Phil Thesis) | रु० ५०.०० |
| ७. महाकविः कालिदासः (संस्कृतम्) पृ० सं० १६० | रु० १०.०० |
| ८. भारतस्य सांस्कृतिकनिधिः (संस्कृतम्), पृ० सं० ४११ | रु० २५.०० |
| ९. दशरूपक-तत्त्वदर्शनम् पृ० ३०० | रु० २५.०० |
| १०. दशरूपक—नान्दी-भाषाटीकासहितं सावलोकम् | रु० १४.०० |
| ११. विंशशताब्दिकं संस्कृतनाटकम्, पृ० सं० २२५ | रु० १५.०० |
| १२. मध्यकालिकः संस्कृतनाटकालोकः | रु० २५.०० |
| १३. नाट्यशास्त्रीय-पारिभाषिकशब्दानुक्रमणिका | रु० १५.०० |
| १४. नाट्यशास्त्रीय-प्रयोगविज्ञानम् | रु० २५.०० |
| १५. आधुनिक-संस्कृत-साहित्यानुशीलनम्, पृ० सं० ३०० | रु० ७.०० |
| १६. सागरिका—१—१९ खण्डाः वस्त्रपुटावृताः | रु० ५००.०० |

| ● डा० वनमाला भवालकर-रचितानि | |
|---|---|
| १. महाभारत में नारी—(हिन्दी) शोधप्रबन्धः पृ० सं० ५२५ | रु० ४०.०० |
| २. पाददण्डम् रूपकम् (संस्कृतम्) | रु० २.०० |
| ३. रामवनगमनम् संगीतिका (संस्कृतम्) | रु० १.०० |
| ४. पार्वतीपरमेश्वरीयम् (संस्कृतम्)—संगीतिका | रु० १.५० |
| ५. पंचमहाकाव्येषु चन्द्रः (निबन्धः) (संस्कृतम्) | रु० १.०० |

| ● डा० राधावल्लभ त्रिपाठि-विरचितानि | |
|---|---|
| १. संस्कृत कवियों के व्यक्तित्व का विकास पी० एच्० डी० शोधग्रन्थः | रु० २५.०० |
| २. वाल्मीकि-विमर्शः | रु० १०.०० |
| ३. मुकुन्दविलासम् | रु० १५.०० |
| ४. नाट्यमण्डपम् | रु० १०.०० |

| ● प्रकीर्णानि | |
|---|---|
| १. सिद्धान्तसम्राट्—डा० मुरलीधर चतुर्वेदी | रु० १५.०० |
| २. सुसंहतभारतम्—(नाटकम्) पुल्लेलरामचन्द्रः | रु० ८.०० |
| ३. साहित्यसन्दर्भाः—डा० रेवाप्रसाद द्विवेदी | रु० ३.०० |
| ४. रसार्णवसुधाकरः सिंहभूपालः, सम्पादक डा० रेवाप्रसाद द्विवेदी | रु० ८.०० |

प्राप्तिस्थानम् : सागरिका-समितिः, गौरनगर, सागर (म० प्र०)

# सागरिका

## विंश-वर्षे द्वितीयोऽङ्कः

२०३८ विक्रम-संवत्सरे


सम्पादकाः

डा० रामजी उपाध्यायः ( प्रधानः )
डा० रेवाप्रसाद द्विवेदी
डा० राधावल्लभः त्रिपाठी
डा० रामगोपालः मिश्रः



प्रकाशिका

सागरिका-समितिः

५ नन्दनगर,

वाराणसी ५ ( बी. एच्. यू० )

प्रचारिका व्यवस्थापिका च
सागरिका–समितिः
गौरनगर, सागर

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४.०० रूप्यकाणि |
| वार्षिकम् | १५.०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००.०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः Cloth Bound Vols. | ५००.०० रूप्यकाणि |
| वर्षे १-५ प्रत्यङ्कम् | ७.०० रूप्यकाणि |
| वर्षे ६-१० " | ६.०० रूप्यकाणि |
| वर्षे ११-१५ " | ५.० रूप्यकाणि |
| वर्षे १६-१९ " | ४.०० रूप्यकाणि |

अङ्कप्रकाशः
प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र मासे
[ जून-सितम्बर-दिसम्बर-मार्च

मुद्रकः
हनुमान मुद्रण यन्त्र
पियरीकलाँ वाराणसी

# विशेषाङ्क-विज्ञप्तिः

अन्ताराष्ट्रिय-संस्कृत-सम्मेलनावसरे सागरिकाया आगामि-प्रकाशनं विंशाब्दिको विशेषाङ्को भविष्यति। संस्कृतभाषया प्राच्यवित्तमानामनुसन्धानद्युतिर्विश्वप्राङ्गणे प्रसारणीयेति सागरिकायाः परमोद्देश्यम्। तदर्थं शोधनिबन्धं यथाशीघ्रं सम्प्रेष्यानुगृह्णन्तु भवन्तः।

**रामजी उपाध्यायः**
प्रधानसम्पादकः
५ नन्दनगर
वाराणसी ५ (बी. एच्. यू०)

# विषयानुक्रमणिका





# नायक-विमर्शः

रामजी उपाध्यायः

संस्कृत–नाट्यशास्त्रेऽभिनवगुप्तानुसारेण नायकोऽभिप्रायत्रयं स्पृशति ; तद्यथा—

१. नायकस्तु फलभोक्ता अङ्गी नायकः प्रधाननायको वेति अति–विशेष वचनम् ।

२. नायकस्तु प्रधाननायकः, तस्य नायिका, प्रतिनायकः, उपनायकः, अनुनायक इति मध्यमसामान्यवचनम् । तत्र पताका-प्रकरी-नायकाः उपनायकाः, लक्ष्मणादयः सहकर्माणोऽनुनायकाः सन्ति ।

३. नायकस्तु कथाबीजफलं प्रति प्रापयितुं नियुक्ताः सर्वे जना इति महासामान्यवचनम् । अत्रामात्यादिभ्यः प्रारभ्य दूत-प्रतिहार-पर्यन्तं प्रधाननायकस्य प्रतिनायकस्य उपनायकस्य च सहाया भृत्याश्च समाविष्टाः ।

शीलदृष्टया उपर्युक्ताः सर्वे नायका कोटित्रयेऽन्तर्भूताः उत्तमा,ः मध्यमाः, अधमाश्चेति[1] । एतेषूत्तममध्यमाश्चतुर्विधाः सन्ति — धीरोदात्तः, धीरललितः, धीरोद्धतः, धीरप्रशान्तश्च । धीरोदात्तादयश्चत्वारोऽधमश्च रूपकेषु प्रधान नायका भवितु-मर्हन्ति ।[2]

सर्व इमे नायका योनिभेदेन दिव्याः, दिव्यादिव्याः, अदिव्याश्च संज्ञिताः । ते प्राणिनोऽप्राणिनश्च क्वचिद् भवन्ति ।

शृङ्गारप्रधानेषु रूपकेषु नायिका-संव्यवहार-दृष्टया दक्षिणः, शठः, धृष्टः, एकनायिकश्चेमे महत्त्वपूर्णभेदाः प्रधाननायकस्य भवन्ति । शृङ्गार-पथेऽपरश्च नायकभेदः चतुरः, उत्तमः, नीचोऽधमः, प्रवृत्तकश्च भवति ।

प्रकरणेऽस्मिन्नन्यत्र च नाट्यशास्त्रे नायकशब्दस्य प्रयोगोऽतिविशेष-वचने, मध्यमसामान्यवचने महासामान्यवचने वाभिप्रेत इति पाठकैरूह्यमेव ।

---

१. अर्थोपक्षेपक–प्रकरणे उत्तमादयो भेदाः महत्त्वपूर्णाः सन्ति ।

२. धीरोदात्तादयः प्रधाननायका उच्चकोटिकेषु रूपकेषु विलसन्ति । भाणप्रहसन–वीथ्यादिषु अधमा एव प्रधाननायकाः प्रयुज्यन्ते ।

## प्रधाननायकः

भरतः प्रधाननायकं परिभाषते—

व्यसनी प्राप्य दुःखं वा युज्यतेऽभ्युदयेन यः ।
तथा पुरुषमाहुस्तं प्रधानं नायकं बुधाः ॥ २४. २१, २२

अभिनवगुप्तानुसारेण स कथां नयति स्वकर्तव्याङ्गभावमिति कथानायको निर्वहणे फलभागी[1] । फलभागित्वेन स फलनायकः । तस्य बहवः पर्याया अङ्गी नायकः, अग्र्यो नायकः, मुख्यो नायकश्च सन्ति ।

अभिनवगुप्तानुसारेण—

असौ नेता फलस्य चाक्रष्टा अमात्यसम्पादिताभिसन्धिप्रत्युपाय-परम्परार्जितस्यापि, यथा तापसवत्सराजे वत्सराजस्य राज्यप्रत्यापत्तिः कर्तव्यतायाममात्याभिसंहितायाम् इति[2] ।

कतिपयनाटकेषु फलनायकेन सह कार्यनायकोऽपि विलसति । तत्र कार्यनायकः प्रधाननायकाय फलं प्रापयितुं व्यवस्यति, फलनायकस्तु फलं भुङ्क्ते । कार्यनायकस्य प्रसिद्धमुदाहरणं मुद्राराक्षसे चाणक्यो वर्तते । तत्र चन्द्रगुप्तः फलनायकौ नाटकीयकार्यव्यापारप्रवर्त्तनाय न्यूनमेव विधत्ते, विपर्यये तु चाणक्यः फलमुद्दिश्य सविधानानि प्राक्कलयति, अपरांश्च कार्यार्थं नियोजयति, फलोन्मुखं च कार्यजातं प्रवर्तयति[3] । प्रतिज्ञायौगन्धरायणवेणीसंहारयोः कार्यनायकौ यौगन्धरायणः भीमश्च तत्रैव फलनायकौ उदयनः, युधिष्ठिरश्च प्रतीताः । सागरनन्दी पुरातननाट्याचार्याणामभिमत मुद्धरति—

साधकः साधनं साध्यं सिद्धिः सम्भोग एव च ।
इत्याह केऽपि नाट्यज्ञा सन्त, साध्यादिपञ्चकम् ॥

एतदनुसृत्य तेन भीमविजये भीमः साधकः इति वर्णितम् तथा च युधिष्ठरस्य राज्यप्राप्तिः सिद्धिरिति ।

प्रायो रूपकेषु कार्यनायकः फलनायकश्च समानः पुरुषो भवति । यथाभिज्ञानशाकुन्तले, मृच्छकटिके, नागानन्दे वा ।

१. ध्वन्यालोकलोचने पृ० ३४७
२. ना० शा० १९.५ अधिकृत्य भारती ।
३. तत्र चन्द्रगुप्तो वदति—राज्ये चारापिता वयम् । ७.८
चाणक्यस्य कार्यनायकत्वमेवाधोलिखितेन प्रमाण्यते—
मनुष्यशस्विनि पदे नियता प्रतिष्ठा । मुद्रा० ७.१४

## धीरोदात्तादयः

उत्तम-मध्यमनायकानां धीरोदात्तादयश्चचतुर्भेदाः सम्भवन्ति। अधम-नायकास्तु एतान् व्यतिरिच्य प्रहसनादिषु प्रयुज्यन्ते।

रसस्तु कथानायकाश्रयस्तद्विपक्षाश्रयो वा निष्पद्यते[१]। एतस्य विश्लेषणमभिनवगुप्तेनाधोविधिना स्पष्टीकृतम्

| नायककोटिः | रस–वैशिष्ट्यम् | वृत्तिवैशिष्ट्यम् |
|---|---|---|
| धीरोदात्तः | धर्मयुद्धवीरप्रधानः | सात्वती |
| धीरोद्धतः | वीररौद्रप्रधानः | आरभटी |
| धीरललितः | वीर-शृङ्गारप्रधानः | कौशिकी |
| धीरप्रशान्तः | दानधर्मवीरशान्तप्रधानः | भारती[२] |

धीरोदात्तादिषु चतुर्षु वीररस-योग्यता वर्तते इति तेषां सामान्यो धर्मः। अतएव वीरं विहायापररसा एव तेषां विभेदकाः सन्तिः। तथा हि धीरोदात्तस्य धर्मवीरः, धीरोद्धतस्य रौद्रः, धीरललितस्य शृंगारः, धीर-प्रशान्तस्य शान्तः। एतेषां विशेषास्तु वृत्तिभिः स्पष्टतः परिचीयन्ते। मम्मटानुसारेण धीरोदात्तो वीरप्रधान एव[३]।

धीरोदात्तादिषु धीरस्य कोऽभिप्रायः ? अत्र धीरस्तु वीरस्यैव पर्यायः। उत्साह सम्पन्न एव धीरः।[४] भोजानुसारेणैते भेदा धैर्यमाश्रित्य निर्मिताः[५]। धीरोदात्तादीनामुदाहरणं भरतानुसारेणाधोलिखितकारिकया-स्पष्टमेव—

देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्याश्च धीरोदात्तौ प्रकीर्तितौ॥

---

१. ध्वन्यालोके ३.६

२. धर्मयुद्धवीरप्रधानो धीरोदात्तः, वीररौद्रप्रधानो धीरोद्धतः, वीरशृंगार-प्रधानो धीरललितः, दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति चत्वारो नायकाः क्रमेण, सात्वत्यारभटीकैशिकीभारती वृत्तिप्रधानाः। ध्वन्या-लोकलोचने ३.६ अधिकृत्यवृत्तिः।

३. काव्यप्रकाशे ७.६२ कारिकावृत्तिश्च

४. मानियर-विलियम्स–कोशे धीरस्तु Brave, Courageous, Energetic भवति।

५. उद्धतो ललितः शान्त उदात्तो धैर्यवृत्तितः। सरस्वतीकण्ठाभरणे ५.१०६ धैर्यं यत्र गुणसन्निवेश–चारुत्वादुदात्तं स धीरोदात्तः इत्यादि भरतकोशे पृष्ठं २१८

धीर-प्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ॥ २४.१८

नाट्यदर्पणे ५.७ राजानस्तु चतुर्विधा इति पाठो लभ्यते ।

अत्र डिमादिषु नायका वस्तुतो धीरोद्धता देवाः सन्ति ।[1] नाटकेषु देवा नायका न भवन्ति । नृपाणां द्विविधं रूपं नाटकादिषु दृश्यते— अन्तःपुरीयं, बाह्यञ्च । अन्तःपुरे तेषां नायिकाविषयकः शृङ्गारो धीरललितत्वमेवोप निबध्नाति । यथा स्वप्नवासवदत्ते, अभिज्ञानशाकुन्तले, विक्रमोर्वशीये, मालविकाग्निमित्रे वा । यद् राज्ञां बाह्यं जीवनं, तत्रामात्यादीनां शौर्यं प्रायः प्रदृश्यते । ते धीरोदात्ताः प्रोक्ताः । धीरप्रशान्तोचिते दानधर्मवीर-शान्ते ब्राह्मणानां विप्राणाञ्चाधिकारो विशेषतरो लक्ष्यते । अतएव नात्र विसंवादो लक्षणीयः । तथापि यथालोके तथा नाटकादिषु चेतरेतरनायका-नामितरेतरचारित्र्य--विशेषो दृश्येत । यथा देवीचन्द्रगुप्ते नायकस्य चन्द्रगुप्तस्यौदात्त्यमेव विलसति ।

देवादीनां धीरोद्धतत्वं सामान्यं लक्षणम् । तेषां विशेषलक्षणमभिनव-गुप्तेन विशदीकृतम् । तथोक्तम्--यद्यपि देवाः पुरुषापेक्षयोद्धतास्तथापि स्वापेक्षया गाम्भीर्य-प्रधानतयोदात्ता उच्यन्ते भगवत्त्रिपुरारिप्रभृतयः, प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः ।

## अधमा अपि प्रधाननायकाः

भरतोऽधमं प्रधाननायकं न प्रतिजानीते । तथोक्तम्—

अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः ।
मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिताः ॥ २४.१६

किं तर्हि न भवन्ति प्रधाननायका अधमा अपि ? बहुषु रूपकेष्वधमा एव प्रधाननायकाः सन्तीति नादृष्टं विपश्चिताम् । तदनुसृत्याभिनवगुप्तेन सिद्धान्तितम्--

हास्यादिरसप्रधानत्वे ह्यधम एव नायकः ।[2]

नाटचदर्पणानुसारेण

---

१—आ पिशाचाद् ब्रह्म यावत् देवाः सन्ति । ना० शा० १३.१८ भारती ।

२. तस्याः ( वीथ्याः ) सर्वरसत्वस्याभिधानात् पर्यायेण रसानां प्राधान्या-दुत्तमो मध्यमोऽधमो वा नायको भवत्येव । तथा च कोहल :—
उत्तमाधममध्या भर्युक्ताप्रकृतिस्तथा एकहार्या द्विहार्या वा सा वीथीत्यभिसंज्ञिता॥
अधमप्रकृतेस्तु न नायकत्वमिति ध्रुवं प्रहसनभाणकादौ किं ब्रूयात ? हास्यादिरसप्रधानत्वे ह्यधम एव नायकः । कथाशरीरफलेन प्रधानतया सम्बध्यमानो नायक उच्यते ।
ना० शा० खण्डस्तृतीयः पृष्ठ ४५६ गा० ओ० सी०

भाण-प्रहसनयोः कस्याञ्चिद् वीथ्यां च नीचोऽपि नायकः तत्र स्पष्टीकृतम्-नीचोऽपीशः कथावशात् । ना० द० ४.७

## योनिदृष्ट्या नायकाः

योनिदृष्ट्या त्रिविधा नायका भवन्ति--दिव्याः, दिव्यादिव्याः, अदिव्याः ( मानुषाः ) च। तत्र देवेषु ब्रह्मण आरभ्य पिशाचान् यावत्' सर्वेऽन्तर्भूताः[1] दिव्यादिव्यास्तु राजान एव भवन्ति। भारतीयधारणानुसारेणेमे नृपा लोकपालांशेन समुद्भूता देवा एव किन्तु मानुषीयोनिषु जाता अदेवा अपि भवन्ति। अत एव ते दिव्यादिव्या इत्युच्यन्ते।[2]। मानुषास्तु सुप्रतीता एव।

अभिनय-दृष्टया प्रकृतीनामिमे भेदा महत्त्वं भजन्ते। तद्यथा--

दैत्य-दानव-यक्षाणां नृपपन्नग रक्षसाम्।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः॥
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते। ना. शा. १२.२३-२४
नाटके देवः प्रधाननायको भवितुं नार्हति।

## अप्राणि-नायकाः

भरतानुसारेणाप्राणिनायका यथावकाशं नियुज्यन्ते। तथोक्तम्--

शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा
नाना प्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः॥
अथवा कारणोपेता भवन्त्येते शरीरिणः।

ना. शा. २१. ९३, ९४

अभिनवगुप्तो विशदयति--

'शैलप्रासादादीनि निर्जीवत्वे प्रस्तुतत्वेन परिगणितान्यपि अवस्था-विशेषेषु नाट्यधर्मेण सजीवत्वेऽपि' इत्यादि।

एते क्वचिदधिष्ठातृदेवरूपेण प्रकटन्ति। यथा उत्तररामचरिते नद्यः। अन्यत्र च स्वरूपेणैव किंचिन्मनुष्यवदाचरन्ति। यथा दूतवाक्ये सुदर्शनादीनि।

परवर्तियुगे छायानाटकमेतदाध्याश्रित्य प्रपञ्चितमासीत्।

---

१-'दिव्यानां देवयोनीनां पिशाचादिब्रह्मान्तानाम्' ना. शा. १३.१८ अधिकृत्य-भारती।

२-दिव्यादिव्या एव राजानो यतो हि नाम ते देवांशजा इति लोकपालांशनिर्माणा राजानः। ना. शा. १२.२५ अधिकृत्य भारती।

देवांशजास्तु राजानो वेदाध्यात्मसुकीर्तिताः। तत्रैव १२.२८

## उपनायकानुनायकयोर्भेदः

नाटकीयेतिवृत्तेऽनुनायको मुख्यनायकेन सह कथारम्भादेव तस्य साह्यमाचरति। यथा प्रतिमानाटके, उत्तररामचरिते च लक्ष्मणो वर्तते। उपनायकौ– पताकानायकः, प्रकरी नायकश्च कथारम्भे न स्याताम्। तयोराविर्भावो विशेषकार्यार्थं परतो भवेत्।

प्रकरीनायकेन समानोऽनुनायकः स्वार्थं न समीहते। पताकानायकस्त्वनुबन्धानुसारतस्स्वार्थाय प्रवर्तते, स्वार्थसिद्धेरनन्तरमेव स प्रधाननायकस्य कार्यं साधयतीति साम्य–वैषम्यानुसारि विवेचनमेतेषाम्।

इमे सहायका एव कार्यपरायणं प्रधाननायकं फलं प्रापयितुमुद्योगिनो भवन्ति। यत्र प्रधाननायकः फलाय चेष्टमानो न दृश्यते,तत्र कार्यनायकश्चाणक्यवत् मुद्राराक्षसे तस्याभीष्टं साधयति। अनेन कार्यनायकादुपनायकस्य भेदः समुद्दिष्टः।

## नायिका-संव्यवहारतो नायकभेदाः

नायिका–विषये नायकस्य वर्तनं परीक्ष्य प्रणयिनो नेतुः पाञ्चविध्यं भरतेन प्रतिपादितम्—

चतुरः, उत्तमः, मध्यः, नीचः, प्रवृत्तकश्च।[1]

चतुरः

समदुःखक्लेशसहः प्रणयक्रोधप्रसादने कुशलः।
योऽर्थी नात्मच्छन्दो दक्षश्चतुरः स बोद्धव्यः॥ २३. ५४

उत्तमः

मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति।
अवमानितश्च नार्या विरज्यते चोत्तमः स पुमान्॥ २३. ५६

मध्यमः

सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्याः।
किञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः स भवेत्॥ २३.५७

नीचोऽधमः

अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः।
मित्रैर्निवार्यमाणो विज्ञेयः सोऽधमः पुरुषः॥ २३.६०

प्रवृत्तकः

अवगणितभयामर्षो मूर्खप्रकृतिः प्रसक्तहासश्च
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु

---

१. स्त्रीसम्प्रयोगविषये ज्ञेयाः पुरुषास्तथा पंच। ना० शा० २३.२३

रतिकलहसम्प्रहारेष्वककर्कशः क्रीडनीयकः स्त्रीणाम् ।
एवंविधस्तु तज्ज्ञैर्विज्ञेयः सम्प्रवृत्तस्तु ।। २३.६२

एतेभ्यो व्यतिरिक्तं ज्येष्ठं नायकमप्यस्मिन् प्रसङ्गे भरतो विवृणोति । तद्यथा,

यो विप्रियं न कुरुते नार्याः किंचिद्विराग-संज्ञातम् ।
अज्ञातेप्सितहृदयः स्मृतिमान् धृतिमान् स तु ज्येष्ठः ।।
ना० शा० २३.५५

इमे भारतीया नायकाः साधारणत एकनायिकाः सन्ति । न तेषां वैविध्यं प्रपंचयितुं धनञ्जयो मतिं कुरुते । स तु पूर्वं प्रत्यन्यया हृतं नायकमेव युवजन-प्रीतये सविशेषं महत्त्वपूर्णं मन्यते, तेषां भेदं च दक्षिणः, शठः, धृष्ट इति प्रस्तावयति । एतेषु धृष्टो वा शठो वा तावद् भरतस्याधमेन समानः ।[1]

अन्यत्र भरतः शठं परिभाषते--

वाचैव मधुरो यस्तु कर्मणा नोपपादकः ।
योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते ।। २२. ३१५

धनञ्जयस्यानुकूलो दक्षिणश्च नायको भरतेन प्रियः, कान्तः, विनीतः, नाथः, स्वामी, जीवितम्, नन्दन इत्यादिभिः नामभिः संकेतितः ।[2] धनञ्जयस्य शठो धृष्टो वा भारतीयनाट्यानुसारेण नायिकया दुःशीलः, दुराचारः, शठः, वामः, विकत्थनः निर्लज्जः, निष्ठुरश्चाभिधीयते ।[3]

धनञ्जयस्तु दक्षिणः, शठः, धृष्टः इति प्रकारत्रयमेव संक्षेपेण वर्णयति । भरतस्तावत् प्रत्येकस्य भेदानपि सूक्ष्मेक्षिकया सरसं विवृणोति । भरतानुसारेण दक्षिणादयो नायका अधोविधाः सन्ति--

दक्षिणः

कुलीनो धृतिमान् दक्षो दक्षिणो वाग्विशारदः । २२. ३१०

शठः

वाचैव मधुरो यस्तु कर्मणा नोपपादकः ।
योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते ।। २२. ३१५

निर्लज्जः

भरतस्य निर्लज्ज एव धनञ्जयस्य धृष्टः । तद्यथा

---

१. व्यक्ताङ्गवैकृतो धृष्टः । गूढविप्रियकृच्छठः । दश० २.७
२. ना० शा० २२. ३०५–३११
३. ना० शा० २२. ३१२–३१९

वार्यमाणो दृढतरं यो नारीषूपसर्पति ।
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः ॥ २२. ३१८

प्रियः

भरतस्य प्रिय एव धनञ्जयस्यानुकूलनायकः । तद्यथा

यो विप्रियं न कुरुते न चायुक्तं प्रभाषते ।
तथार्जवसमाचारः स प्रियस्त्वभिधीयते ॥ २२.३०५

# सप्तदशशतस्य संस्कृतमहाकाव्यानि

रामलखन पाण्डेयः

## रामचन्द्रोदयम्

रामचन्द्रोदयस्य नाम महाकाव्यस्य प्रणेता वेङ्कटेशनामा दाक्षिणात्यः कविः। प्रतिसर्गान्तिपद्यानुसारेण कविरेष आत्रेयगोत्रोद्भवस्य स्वसमानाभिधस्य वेङ्कटेशार्यस्य पौत्रः श्रीनिवासस्य च पुत्र आसीत्। एतस्य जन्म काञ्चीं निकषा १५९६ ई० संवत्सरेऽभूत्। रामानुजीयवैष्णवसम्प्रदायानुगत एष भगवति रामचन्द्रे महतीं प्रीतिं चकार। रामचन्द्रोदयम्, रामयमकार्णवः,[1] श्लेषमाला[2] चेत्यप्रकाशिता अस्य तिस्रः कृतयः प्राप्यन्ते।

ग्रन्थाक्षरैस्तालपत्रेषु लिखितो रामचन्द्रोदयस्यादर्शः तञ्जापुरस्य सरस्वतीमहलग्रन्थालयये ( B/D/43/D37311 ) सुरक्षितोऽस्ति। तस्य देवनागरीप्रतिलिपिरपि तत्र ( ९४० तथा ९४१ ) लभ्यते। सम्पूर्णतयोपलब्धस्याप्यस्य ग्रन्थस्य वर्णपदपादादिगतः प्रतिपृष्ठं पाठक्रमस्त्रुटितोऽस्ति।

रामचन्द्रोदयं त्रिंशत्सर्गेषूपनिबद्धं बृहत्कायं महाकाव्यं वर्तते। तत्र विशेषो यत् सर्वेषु त्रिंशत्सर्गेषु पद्यसंख्यापि शताधिकैव। अस्य महाकाव्यस्य व्याख्यामपि कविः स्वयमेव लिखितवान्। महाकाव्यस्य तद्व्याख्यानस्य च विरचनं तेन वाराणस्यां स्थितेन विहितम्[3]। रामचन्द्रोदयं १६५६ खिस्ताब्दे प्रणीतमिति महाकाव्यस्यान्यप्रमाणानि च ग्रन्थान्ते कविर्लिखति——

वेदपूर्णगुणपावकपद्यं व्यौमवह्निसमसर्गमुदारम्।
काव्यमङ्गुणशैलयुगाब्दे वेङ्कटोऽकृत कलौ कविवर्यः ॥
षट्त्रिंशदत्र वृत्तानि छन्दांसि च चतुर्दश।
खार्कप्राणा इह श्लोका अनुष्टुप्संख्यया मता ॥

---

१—तञ्जौरस्यसरस्वतीमहलग्रन्थालये कैट. १०३२३।

२—मैसूर O M L 260 ( द्र० कृष्णमाचार्यस्य संस्कृतसाहित्येतिहासः, पृ० ३७३ )

३—"काशीं गतेन क्लृप्तं काव्यं मुनिबाणतिथिमिते हि शके" इति ग्रन्थान्तव्याख्यान्ते।

रामचन्द्रोदयमहाकाव्ये रामस्य राज्याभिषेकं यावद् बृहती कथा विषयीकृता। प्रथमसर्गे सूर्यवंशस्य संक्षिप्तेतिहासेन सह दशरथस्याखेटगतापराधवशान्मुनिशापाधिगमनान्तं वस्तु विवेचितम्। अयोध्यां वर्णयन् कविर्लिखति-

दिक्षु दिक्षु महावीथ्यो वीथ्यां वीथ्यां मणीगृहाः।
गृहे गृहे महत्सौधं सौधे सौधे नवा स्त्रियः॥२८

स्त्रीषु स्त्रीषु शुभा भावा भावे भावे सदा मुदः।
मोदे मोदे परं गानं गाने गाने मनोयुगः॥ २९

द्वितीयसर्गे प्रधानतया दशरथस्य पुत्रेष्टियज्ञसम्पादनं प्रतिपादितम्। तदनुषङ्गतया रावणोपद्रवनिराकरणप्रयुक्तदेवादिकृतं विष्णुस्तवनं विलिख्य रक्षसां विनाशाय विष्णोरवतारसूचनं च स्वविषयीकृतम्। तत्र प्रकृतविषयानुकूलं विष्णुवर्णनं यथा--

समस्तदिक्पालकसारलुण्ठनप्रचण्डदोर्दण्डनिशाचरार्जितम्।
यशः समादाय करेण केवलं छलेन शंखस्य हसन्निवाच्युतः॥७३

तृतीयसर्गे राज्ञीनां दोहदवर्णनादारभ्य रामादीनां यौवनसौन्दर्योल्लासितान्तं वस्तु विविच्य मिथिलायां जन्मतो रामेऽनुरक्तायाः सीतायाश्चरितं कीर्तितम्। यौवनागमनं कविर्वर्णयति—

कालवस्तु किल येन कल्पते यस्य कालकलिता न पक्वता।
तद्धि कालपरिपाकसंभवं यौवनं सरसभावमाययौ॥७१

चतुर्थपञ्चमसर्गयोः विश्वामित्रेण सह रामलक्ष्मणयोर्वनगमनम्, रक्षोविनाशमुखेन मुनियज्ञस्य निर्विघ्नसम्पादनम्, अहिल्योद्धारः, मिथिलाधिगमनं चेति वस्तु विलसति। चतुर्थसर्गस्योत्तरार्धे गङ्गावर्णनं विश्वामित्रमुखेन कारितम्। पञ्चमसर्गस्योत्तरार्धे मिथिलावर्णनं वर्तते--

स्फुटचित्रयुवावली लसन्मुखपूर्णेन्दुविलोकनाशया।
अपि कृत्रिमपुत्रिकाशतैरनिमेषत्वमधायि यत्पुरे॥५६
सितसौधसमूहभासिता घनमध्योपवनेन मेचका।
बहुवीचिपरस्पराहतिस्फुटफेनाब्धितुलां दधार या॥८३

षष्ठसर्गादारभ्यैकादशसर्गपर्यन्तं स्वयंवरविवाहादिप्रयुक्तमितिवृत्तं प्रचरति। अस्मिन् प्रकरणे कविता सर्वतोभावेन सर्वाधिकचारुतामुपगता। तदत्र विविधप्रसंगानुकूलतामवतार्य कविरनेकविधिना सीतारामयोः सौन्दर्यं वर्णयन् नहि श्रान्तिमधिगच्छति। विश्वामित्रमुखेन रामस्य परिचयं कारयन्नसौ लिखति—

अस्याङ्गे कलयसि यत्र सौकुमार्यं
तत्रैव स्फुटति सहस्रशोऽपि वज्रम् ।
यद्वीक्षा रचयति शीतलानशेषान्
सा दद्याद् जगदिदमौर्वगर्वघोरा ॥७.७४

सीतारामयोरुपमानानि यथा––

मेघेन विद्युद्रविणा प्रभेव धात्रेव वाणी हरिणेव लक्ष्मीः ।
शिखेव दीपेन कलेन्दुनेव रामेण सीता रमतामभिन्ना ॥ ८.२४

अत्रैव विवाहप्रसङ्गे विलक्षणं विनोदप्रभरं प्रकरणमवतार्य नायकयो वर्णनं कविः प्रस्तौति । जनको विश्वामित्रश्च सीतारामयोरनुरूपसंयोग-प्रशंसनक्रमे ऽकस्मादेव तौ द्वावपि एकैकपक्षगतौ भूत्वा स्वस्वपक्षगतस्या-धिक्यं दर्शयतः—

रामस्त्वयं नस्तव सापि रामा पयोधरोदारतनूगुणाढ्या ।
श्यामाम्बुभाविन्यखिलं समानं रामो बलीयानबला हि सा ते ॥१४॥
नृपो बभाषेऽथ बलीति योगिन् यदात्थ रामं तदिदं यथार्थम् ।
किन्तूदरे गर्तगभीरनाभौ बलित्रयं नाम बिभर्ति बाला ॥१५॥
मुनिर्जगादामुनयोनिजायाः कुलव्यपायान्न कुलोचिता सा ।
लोकेडितेक्ष्वाकुकुलप्रसूनो रघुद्वहोऽयं रमणीयभूमा ॥१८॥
नृपोऽब्रवीन्मे तनयाप्रसूर्या कुलाचलास्तां शिरसा वहन्ति ।
येष्वेकमर्को रघुवंशपूज्यः प्रदक्षिणं मेरुमुपातनोति ॥१९॥

द्वादशसर्गतश्चतुर्दशसर्गं यावदयोध्यायां विविधमहोत्सवादिकं सीता-रामयोः समागमसुखं च वर्णितम् । चतुर्दशसर्गान्ते रामराज्याभिषेकस्योप-क्रमो निरूपितः । पञ्चदशषोडशसर्गयोः कैकयीकोपवशाद् रामादीनां वन-गमनं विवेचितम् । सम्पूर्णोऽपि चतुर्दशसर्गो विविधैश्चित्रालंकारैः खचितो-ऽस्ति––

विवरे विवरे वीरो विवेराव वयोवरः ।
वरायो रेरिरायायो ययौ रायो वरावरः ॥३३

अग्रिमसर्गेषु वनगतेतिवृत्तं रावणहननादिकं यथावदुपस्थापितम् । त्रिंशसर्गे रामराज्याभिषेकवर्णनाद् रामस्य चिरं राज्यशासनमिति सूचनाच्च महाकाव्यमिदं समाप्तिं गच्छति ।

# सागरिका



★

विंशवर्षे चतुर्थोऽङ्कः

★

२०३८ विक्रम-संवत्सरे

# सागरिका

## विंश-वर्षे चतुर्थोअंकः

२०३८ विक्रम-संवत्सरे

सम्पादकाः

डॉ० रामजी उपाध्यायः ( प्रधानः )

डॉ० रेवाप्रसाद द्विवेदी

डॉ० राधावल्लभः त्रिपाठी

डॉ० रामगोपालः मिश्रः

प्रकाशिका

**सागरिका-समितिः**

महामनापुरी

वाराणसी-५ ( बी० एच० यू० )

प्रचारिका व्यवस्थापिका च
सागरिका-समितिः
गौरनगर, सागर

देयम्

| | | |
|---|---|---|
| प्रत्यङ्कम् | | ४.०० रूप्यकाणि |
| वार्षिकम् | | १५.०० रूप्यकाणि |
| आजीवनग्राहकस्य | | २००.०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रलुटबन्धाः | | |
| Cloth Bound Vols. | | ५००.०० रूप्यकाणि |
| वर्षे १–५ | प्रत्यङ्कम् | ७.०० रूप्यकाणि |
| वर्षे ६–१० | ,, | ६.०० रूप्यकाणि |
| वर्षे ११–१५ | ,, | ५.०० रूप्यकाणि |
| वर्षे १६–१९ | ,, | ४.०० रूप्यकाणि |

अङ्कप्रकाशः प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र मासे
[ जून-सितम्बर-दिसम्बर-मार्च ]

मुद्रक : महाकान्त प्रेस, रेवड़ी तालाब, वाराणसी

# विषय-सूची

# महाभारतीय-संस्कृतिकोश

२

'झ'



'ड'



'त'

'द'

१३८ ( दशांग ) श. ५. १४
धनुः ( षड्रत्नि ) आ. १५५. २४
धनोपाय ( समुद्र-प्रवेश ) आर. २४५. २८
धर्म आ. ५७. ५; १८७. २८; २. ५. १७; आर. १३. ६; ३१. ४–७; ३२. २२; ३४. ४५; ३५. २१; १३१. १०–११; उ. २७. ५,६, ९; ३०. ४५; ७०. १९; ८८. ६६; १३५. ८; १४३. ७; १४६. १६; भी. २. १४. क. ४९. ५० शा. ८१. ५
( अनेकान्त, बहुद्वार ) अ. २३. १८
( अष्टविध ) आर. २. ७१
( क्षत्र-दस्यु ) द्रो. १३१. २
( जयकारण ) भी. २१. ११
-गति आर. १९९. २
-चक्र आ. १०२. १२
-चक्रप्रवर्तन शा. ३४३. २; आश्व. ३२. २५
-चर्या शा. ३८. ४
-तत्त्वार्थदर्शी क. ४९. ५३
-तनु आर. २९८. ७
( त्रिविध वेदोक्त, शास्त्रोक्त, शिष्टाचीर्ण ) शा. ३४१. ६
-द्वार आर. २९८. ८; अ. ११४. १–१०
-धन शा. ६०. ३३
-ध्वज शा. १८. ३३; १२०. ९
-ध्वजिक अ. १४८. ३५
-पत्नी आ. १४. ६; ६०. १३; ९४. ४८; ११२. २; ११६. २३; आर. १३. ५८; ४६. २०; अ. ११०. ९
-पथ आर. १३. ६०
-पद शा. १३०. १९, २०
( परागति स. ६२. १४
( परिभाषा ) शा. ११०. ११
-परीक्षा आर. १३१. २८
-प्रवचन क. ४९. ४९
( प्रवृत्त-निवृत्त ) शा. १९२. ३१
( बहुशाख ) शा. ३४२. ९–१६
बुद्धि आ. ८७. १७
( ब्रह्मपुत्र ) अ. १४८. ६
-भिक्षु शा. १५९. २
-रक्षक ( क्षत्रिय ) शा. ३२. ४
-रक्षी ( क्षत्रिय ) शा. ४९. ६३
-वाणिजक अ. १४८. ३५
-विद् शा. १४. १७
-वैतसिक शा १५२. १६; आश्व १४. २४
( शाश्वत ) शा. ६०. ६
( श्रद्धालक्षण ) आश्व. ३५. ३३
-सङ्कर क. ३०. ५६; शा. ३०८. ६१
-संस्थापन भी. २६. ८
( सनातन ) आ. १८८. १९; आर. ३२. २८
-सेतु अ. १३६. ४
धर्महा शा. ३२. ७
धर्माधर्म आर. ११९. ५
( त्याज्य ) शा. ३१६. ४०
धर्मापेक्ष द्रो. ६१ ३०
धर्माराम उ. ३६. ७; अ. १. १९
धर्मार्थकाम ( सममेव सेव्याः ) शा. १६१. ३८

'न'

७४; ९३. ५; उ. १८७. २६; अ. २६. ३६
प्रयाण आ. २०२. १–४; भी. २८. ३०
प्रयुद्ध आर. १२. ५३
प्रयोग आ. १३४. २४; क. २५. १०; अ. १०७ ९४
प्रलम्भ स. ४३. ११
प्रलय आर. १८६. ४–९, २३. ५६–७६; भी. ३१. १८
प्रवास ( महिमा ) शा. ५७. ३
प्रवृत्तक-धर्म शा. १८९. १०
प्रवृत्ति शा. २१०. ४
( अभ्युदय-क्रिया ) शा. ३२७. ५
-धर्मी ( सप्तर्षयः ) शा. ३२७. ६१
-निवृत्ति भी. ३८. ७
-निवृत्ति-धर्मकर्त्ता ( भगवान् ) शा. ३२७. २
प्रव्याहार शा. २१६. १
प्रव्रजिता अ. १०७. १२४
प्रश्रय शा. ३. १
प्रसवार्थी आर. ९४. १३
प्रसून ( भोजन ) अ. २६. ७
प्रस्थान ( रीति ) आ. १३३. १–४
प्रस्थान-विधि उ. ९५. २१
प्रहरण ( परश्वध, भिण्डिपाल, शक्ति, तोमर, मुग्दर, ऋष्टि, परशु, प्रास, करवाल, खड्ग, कार्मुक, शर ) उ. १९. ३–४
प्राकार आ. १९९. २९
-तोरण क. २४. १६
प्राकृत आ. १३८. ६१–२३
( असंस्कृत ) आ. ६८. २४
-पुरुष वि. ४१. १२
-मानव भी. ९९. २३
( रिपु ) वि. २८. ४
प्राक्कर्म स्त्री. ३. १४
प्राज्ञ आ ६९. १०; शा १३७. ८३
प्राड्विवाक शा. १२१. ४५
प्राण आर १७६. १०; भी. ३०. १०
( अन्न ) शा. १५. २२
( विवेचन ) शा. १७८. ३
प्राणायाम आर. ३. १४; भी. २६. २९; आश्व. २०. १७
प्राणिवध आ. ९४. १५
प्रातराश अ. ९३. १०
( पञ्चाशत् मृग ) आर २५१. ११
प्रातिवेश्य द्रो. ५१. ३४
प्राय ( आमरण अनशन ) आर. २३८. १०
प्रायण शा. ३२२. २४
प्रायमासीन शा. ११२. ८६
प्रायश्चित्त आर. ३२. १७; उ. ३७. १२; श. ३२. २४
-विधान शा ३५. २; १५९. १–७२
-स्वरूप शा. ३६. १–४६
प्रायोपविष्ट आर. २३८. ४८
प्रायोपवेश द्रो. ११८. १६; शा. २७. २३
प्रायोपवेशन आर. २३९. १६–१७
प्रार्थना ( याचना-विष ) आर. २९७. ६१
प्रावार स. ४५. ९
प्रावट श. ४०. १७

ब्रह्मवृक्ष शा. ७४. १४
( जीवानामा जीवः ) आश्व. ४७.१३
ब्रह्मशिर आ. १. १५; सौ. १५. २३
ब्रह्मशिरा सौ. १२.४
ब्रह्मसर अ. ९६.७
ब्रह्मसूत्र द्रो. ६९.६९
ब्रह्मस्थान शा. १९२.१२३; २२२.२
ब्रह्महण उ. ३५.४१
ब्रह्महत्या आ. ३३. १९; ७१. ३९;
आर. १३९. १०; उ. ९.
३०

ब्रह्महा शा. ३५. १७
ब्रह्मा आ. १.३०; ६.५; आर १८७.
४०; उ. ९५.२

ब्रह्माग्निषोमीय शा. ३२९.५०
ब्रह्मा ( मेरुपर्वतवासी ) अ. ९२.७
ब्रह्माश्रम शा. ६६.१०,११
( प्रव्रजितानां ज्ञानभूमिः ) अ. १०.५
ब्रह्मास्त्र श. ६१. १९; शा. २. १३
ब्राह्मण आ. १.१०८, २०१; ३.१३२;
११.१३; २४.३; ६८.५६;
१२८. ८; १६५. २७;
१६८.९; १७९.११–१३
१८१.३५; स. ५.८६;
१९.४२; ३९.६; ७२.२०
आर. २.४; २५.१५; २७.
१४–२०; ४७.६; ९४.५;
१७७.१६.१७–२१, २५;
१८९.१८; २३८.२४;
२८७.४–६; उ. २९.४६;
३३.७५, ७६; ४३.२९;
१३७.२०; भी. ११६.३३

क. ३०. ८; शा. ३. २५;
३९.३८; ७३.६; १३०.२
१३३. १८; १५४. ७;
१८१. १; १९२. ४५;
२१८.१३; ३१२.१४-१९;
३२९. १३; अ. ८. १२;
९८. ९

( अवध्य ) आ. १८०.९
( अविद्वानपि पूज्यः ) अ. १३६.२१
( आरण्यक-प्रव्रजित ) शा. १३३.८
( ऋषि ) आर. २७.८, १९१.३, ४;
९; १९०.५२
( कः ) आर. १९७.३१–३८
( कर्म ) शा. ६३.१–२
काम्या आर. १८६.१२८
( कोपित ) आ. ७६. २४
( कृषि-गोरक्ष ) अ. ३३.११
( क्रुद्ध ) उ. ४०.७
-क्षत्रिय उ. १८०. २५
( क्षत्रियजातः ) आ. १२७. १४
-क्षत्रिय-योग अ. १३७. १२
( क्षत्रियाद्वरः ) अ. १४१.३०
( गोभक्ष ) उ. ३५.२०
-चेष्टा शा. २३.९
( जाति परिवर्तन ) आ. ६५.२९
( तपसा ) श. ३९. २९
( तीर्थ ) अ. ९.२४
( तपः श्रुतयोनिभिः ) अ. १२२. ७
( दम ) सौ. ३.१९
-धर्म शा. १४. १५
-धर्म ( दम, स्वाध्याय, अध्यापन )
शा. ६०. ९

'य'

'ल'

'ह'

# पर्व-संक्षिप्तिका

| | |
|---|---|
| १. आदि | आ. |
| २. सभा | स. |
| ३. आरण्यक | आर. |
| ४. विराट | वि. |
| ५. उद्योग | उ. |
| ६. भीष्म | भी. |
| ७. द्रोण | द्रो. |
| ८. कर्ण | क. |
| ९. शल्य | श. |
| १०. सौप्तिक | सौ. |
| ११. स्त्री | स्त्री. |
| १२. शान्ति | शा. |
| १३. अनुशासन | अ. |
| १४. आश्वमेधिक | आश्व. |
| १५. आश्रमवासिक | आश्र. |
| १६. मौसल | मौ. |
| १७. महाप्रास्थानिक | महा. |
| १८. स्वर्गारोहण | स्व. |

# अर्वाचीनसंस्कृतगद्यसमीक्षणम्

डॉ० कैलाशनाथ द्विवेदी एम० ए० डी० लिट्०

संस्कृत-साहित्ये वैदिककालदारभ्याधुनिककालपर्यन्तं गद्य-काव्य-परम्परा अविच्छिन्नावलोक्यते। संस्कृतगद्यस्य सुदीर्घपरम्परायामर्वाचीन संस्कृतगद्यमत्यन्तं समृद्धमधोलिखितरूपेणावाप्यते।

१—प्रबन्धकथात्मकं गद्यम्।

२—मुक्तककथात्मकं गद्यम्।

३—चरितप्रधानमाख्यानात्मकं गद्यम्।

४—अनूदितं गद्यम्।

५—प्रकीर्णं 'विविधविषयात्मकं' गद्यम्।

संक्षेपेण समीक्ष्यतेऽस्मिन् शोधपत्रेऽर्वाचीनसंस्कृतगद्यसाहित्यमत्र।

## प्रबन्धकथात्मकं गद्यम्

अर्वाचीनसंस्कृतगद्यसाहित्यं प्रायः प्रबन्धकथात्मकं 'उपन्याससमन्वितं' प्राप्यते। अधोलिखिताः कृतयोऽस्यां विधायां महत्त्वपूर्णाः सन्ति।

### मन्दारमञ्जरी

अल्मोड़ा जनपदस्य पटियाग्रामवासिनः महाकवेः विश्वेश्वर-पाण्डेयस्य "मन्दारमञ्जरी" प्रबन्धकथात्मकगद्यसाहित्यस्य प्रतिनिधिरचना कथयितुं शक्यते, किन्तु कादम्बर्या गद्यशैलीमनुसृत्यापि भाषाभावयोरियं न तादृशी प्रभावशालिनी विद्यते। यथा—

। "सरस्वतीवाश्रितचतुरानना, श्रीरिव प्रोल्लसितपद्माकरा, देवसेनेव बहुलापत्यार्हा, पौलोमीवानुभूतशतमखा, लोपामुद्रेव कान्तागस्त्यानवेक्षोद्भवा, रतिरिव पंचबाण-संचरणभूमिः, सीतेवानधिगतयोनिसंकरा...।" चेति।

'मन्दारमंजर्यां श्लेषोपमोत्प्रेक्षारूपकाद्यलंकाराणां बाहुल्येन दीर्घसमासपूर्णदीर्घवाक्ययोजनामध्ये दुर्बलतन्तुमिव कथासूत्रं विलुप्तं भवति। अस्यां कृतौ समसामयिकप्रवृत्तीनामभावो वर्तते।

सुशीला

तमिलनाडुप्रदेशे संस्कृताध्ययनस्य अधीक्षकस्य कृष्णमाचार्यस्य '१८६९-१९२४ ई०[1]' उत्कृष्टा उपन्यासकृतिः "सुशीला" स्वसुबोधभाषाशैल्या स्त्रीः सदाचरणाय शिक्षयति। श्रीकृष्णमाचार्यस्य पातिव्रत्य-पाणिग्रहण-वररुचि-प्रभृतयोऽन्यगद्यकाव्यग्रन्थाः प्राप्यन्ते। सुशीलायामादर्शहिन्दुनारी-जीवनस्य शोभनं चित्रणं हृदयावर्जकं विद्यते।

मन्दारवती

रङ्गनाथाचार्यपुत्रः कविरत्नकृष्णमाचार्यः कादम्बरी शैलीमनुसृत्य अष्टादशप्रकरणेषु मन्दारवतीं विरचितवान्। उपन्यासकृतिरियं तस्य लोकप्रिया रचनास्ति, यस्यां पुरातनतया सार्धमाधुनिकताया अपि प्रतिच्छविर्विद्यते। भाषा-शैली कृतेरस्या अत्यन्तं स्वाभाविकी सुन्दर-सालंकृत-वाक्योजना सर्वत्र सहृदयमनो हरति। यथा--

"अथ भगवानम्बरमणिरभ्युदयोन्मुखः। अमाथिषुः कुलायान् पक्षतिविधूनानैरुत्पतनोद्यतानि शकुन्तकुलानि। अलमकार्षुर्गृहाङ्गणानि गोमयानुलेपनादिभिः परिचारिकाः। अजृम्भिषत रथ्यासु पांसुक्रीडारतानामर्भकाणां कोलाहलारावाः[2]"

जयन्तिका

विंशशताब्ध्यामस्यां कर्णाटकप्रदेशीयः जग्गु-अलवार-आयंगरः "जयन्तिका" नाम्नीमुपन्यासकृतिं विरचितवान्। जयन्तिकार्वाचीनकथा-साहित्ये सर्वथाद्वितीया मौलिकी रचना, तथाप्यीयं कादम्बर्या प्रचुरं प्रभाविता परिलक्ष्यते।

---

१—"संस्कृतसाहित्य का आलोचनात्मक इतिहास" डॉ० रामजी उपाध्यायः, प्रयाग पृ०२४६। अर्वाचीन संस्कृत साहित्य-डॉ० श्रीधरभास्कर नागपुरम् पृ० २०९।

२—मन्दारवती, कृष्णमाचार्यः, वाग्विलाप्रेस, मद्रास, १९२९, पृ०३९।

सौदामिनी

कर्णाटकप्रदेशीयो नरसिंहाचार्यः विंशशताब्द्याः सुविख्यातः संस्कृत-गद्यकाव्यकार आसीत्। सौदामिनी अस्य सुप्रसिद्धोपन्यासकृतिरस्ति। तत्र मगधनरेशस्य शूरसेनस्य विवाहो विदर्भराजकुमार्या सौदामिन्या सह सम्यग् रूपेण वर्णितोऽस्ति।

सौदामिन्या अपरः प्रणयी विजयवर्मासीत्, यः शूरसेनराज्यं विजितवान् किन्तु अन्ते शूरसेनः स्वपराक्रमेण सौदामिन्या सह स्वराज्यमपि लब्धवान्। अस्योपन्यासस्य कथावस्तु रोचकं, भाषा-शैली च मनोहारिणी विद्यते।

कुमदिनीचन्द्रम्

भाषाशैलीदृष्ट्या "कुमुदिनीचन्द्रम्" विंशशताब्द्याः सर्वोत्तमोपन्यास-कृतिः मन्यते।

मेधाव्रताचार्योऽस्त्यस्याः कृतेः लेखकः। उपन्यासेऽस्मिन् वीरवरकेशरीसिंहस्य पुत्रः चन्द्रसिंहोऽस्ति प्रधाननायकः, नायिका च कुमुदिनी अस्ति। केशरीसिंहस्य द्वितीयपुत्रः रणवीरसिंह उपनायकोऽस्ति रत्ना-प्रभा-चोपनायिका विद्यते। क्रूरसिंहयोगीन्द्रविमलादिपुरुषनारीपात्राणाँ चारुचरित्रचित्रणमस्यां रचनायां मनोहरमस्ति। षोडशकलासु विभक्तं कथावस्तु वर्तमानयुग-प्रवृत्तिभ्यः पराङ्मुखीभायापि केवलं व्यंग्यरूपेण वर्तमानपरिस्थितीः संकेतयति। कृतौ प्रत्येककलायाः प्रारम्भे प्रासंगिक-श्लोकबद्धाः सूक्तयो विराजन्ते। यथाहि--

मृगेषु मैत्री मुदितात्मदृष्टौ कृपा मुहुः प्राणिषु दुःखितेषु।
येषां न ते कस्य भवन्ति वन्द्याः कौशेयकौपीनभृतो मुनीन्द्राः" ॥

कुमुदिनीचन्द्रम् पृ० ४

प्रबन्धकथात्मकगद्यसाहित्ये श्रीमतोराजम्मारचितचन्द्रमौलिः, श्रीनारायण[1] शास्त्रिख्रिस्तेमहोदयस्य दिव्यदृष्टिः, आचार्य-श्रीशैलरचिता मेनका, म० म० हरिदास[2]-सिद्धान्तवागीशकृता सरलादिप्रबन्धात्मककथाकृतय उल्लेखनीयाः सन्ति।

---

१—दिव्यदृष्टिः ना० शा० खिस्ते, वाराणसी, १९३९ अमरभारती-संस्कृत मासिकपत्रिका

२—सरला हरिदास-सिद्धान्तवागीशः) ४१ देवलेन, कलिकाता-१४।

मुक्तकं कथात्मकं गद्यम्

मुक्तककथात्मकगद्यसाहित्येऽनेका कृतयो विद्यन्ते, यास्वधोलिखिता उल्लेखनीयाः सन्ति ।

कथामुक्तावली

अर्वाचीनकालस्य सुप्रसिद्धा संस्कृत–कवयित्री गद्यलेखिका च पण्डिता क्षमारावमहोदया कथामुक्तावल्या रचयित्री । कथा-मुक्तावली सरल-प्रवाहपूर्णगद्ये विरचितानां रोचककथानां संग्रहोऽस्ति । कथापञ्चक–ग्राम्य-ज्योतिरन्ये तस्याः सुप्रसिद्धे मुक्तककथाकृती स्तः । रोचकताघटनावैचित्र्यादि दृष्ट्या क्षमारावरचिताः कथा हिन्दीकथानामिव लोकप्रियाः सन्ति ।

कथासंवर्तिका

भागीरथप्रसादत्रिपाठी "वागीशः" शास्त्री कथासंवर्तिकायाः कर्तास्ति । मनोरमभाषाशैल्याः सरसास्त्रयोदशकथाः विलसन्ति कथासंवर्तिकायाम्, यासामाधारोऽस्ति दशार्णक्षेत्रस्य लोकजीवनम् । इमाः कथा न केवलं बालकेभ्यः रुचिकराः प्रत्युत प्रौढजनेभ्योऽपि शिक्षाप्रदाः सन्ति ।

कौमुदीकथा कल्लोलिनी

पं० रामशरणत्रिपाठी रचयितास्ति कौमुदीकथाकल्लोलिन्याः, यस्यां भारतीयसाहित्यपरम्परा पूर्णतयानुसृता । नरवाहनदत्तस्य सुप्रसिद्धकथा-द्वारेण त्रिपाठिना काव्यात्मकरूपेण लघुकौमुद्याः सूत्राणां संज्ञान–प्रदानाय समीचीनः प्रयस्तवान् ।

शैवलिनी कुमुदिनी च

बंगलौर–सेण्ट्रलमहाविद्यालयस्य संस्कृतविभागाध्यक्षः चक्रवर्ती राज-गोपालाचार्यः शैवलिनी कुमुदिन्यौ कथाकृती विरचितवान्, ययोः ग्राम्य-कथाभिः सार्धं काल्पनिकेतिवृत्तानां विलासो विद्यते । विलासकुमारीसंगर-नाम्न्योरपरे गद्यरचनेपि तस्य विख्याते वर्तेते ।

इत्थं संस्कृतस्य मुक्तककथात्मकं गद्यमपि शिवदत्तशर्माचतुर्वेदि-सम्पादिताभिनवकथाकुंजादिनानाकृतिभिः पर्याप्तं समृद्धमवलोक्यते ।

चरितप्रधानमाख्यानात्मकं गद्यसाहित्यम्

प्रबन्धात्मकविधायां चरितप्रधानमाख्यानात्मकं गद्यसाहित्यमप्य-त्यन्तं समृद्धं संलक्ष्यते, । तत्र निम्नलिखितकृतयउ ल्लेखनीया सन्ति ।

श्रीकृष्णाभ्युदयम्

श्रीशैलदीक्षित— ( तिरुँमलाचार्य )–प्रणीतं श्रीकृष्णाभ्युदयं गद्यकाव्यं प्रणेतुः प्रतिमायाः श्रेष्ठं निदर्शनमस्ति ।

अस्मिन् गद्यग्रन्थे श्रीकृष्णस्य जीवनचरितं रमणीयतरं वर्णितमस्ति। चरितप्रधानेऽस्मिन्नाख्यानग्रन्थे गद्यकाव्यशैली वर्ण्यविषयानुसारिणी अत्यन्तमुदात्ता वर्तते। भारतीविलासः कावेरीगद्यञ्च अन्ये गद्यकाव्यरचने श्रीशैलदीक्षितस्य स्तः।[1]

उदयनचरितम्

पंचदशाध्यायेषु प्रवाहपूर्ण–प्रसादगुणमयीभाषायां व्ही० अनन्ताचार्यः रोचकाख्यानम् ''उदयनचरितम्'' विरचितवान्। ऐतिहासिकपृष्ठभूमावियं गद्यकृतिः सर्वथा सफलैवास्ति।

शिवराजविजयम्

अर्वाचीनसंस्कृतगद्यसाहित्ये चरितप्रधानाख्यानात्मकंकृतिषु रचनेयं मूर्धन्या मन्यते।

ऐतिहासिकेऽस्मिन्नुपन्यासे छत्रपतिशिवराजजीवनवृत्तसम्बन्धिकथानकं निपुणतया निबद्धमस्ति। रचयितुरस्य अम्बिकादत्तव्यासस्य उत्कृष्टभाषाशैल्याः परिचयः पदे-पदेऽस्मिन्नाख्याने प्राप्यते। ओजःपूर्णप्रवाहमय्यां भाषायां पदलालित्यं, संवादसौष्ठवं, परिवेशानुकूलं चारुप्रकृतिचित्रणञ्च सर्वत्र संलक्ष्यते। यथा—''महाराष्ट्रदेशरत्नम् यवनशोणितपिपासाकुलकृपाणः, वीरतासीमन्तिनीसीमन्तसुन्दरसान्द्रसिन्दूरदानदेदीप्यमानदोर्दण्डः, मुकुटमणिर्महाराष्ट्राणां, भूषणं भटानाम्, निधिर्नीतीनाम्, कुलभवनं कौशलानाम्, पारावारः परमोत्साहानाम् स्वधर्मग्रहग्रहिलः इति।[2]''

वस्तुतोऽभिनववाण इति विख्यातो महाकविव्यासः छत्रपतेः शिवराजस्य गौरवमयं भव्यञ्च चरित्रचित्रणे सर्वथा सफलोऽस्ति।

लोकमान्यतिलकचरितम्—

लोकमान्यतिलकस्य जन्मशताब्दमहोत्सवावसरे १९५६ ई० वर्षे श्रीकृष्णवामनः चितले महोदयोऽष्टदशपर्वसु लोकमान्यतिलकचरितम् सरलप्रवाहपूर्णललितभाषया लिखितवान्। लेखकस्य भाषासारल्यस्य निदर्शनं प्रस्तुतेऽवतरणेऽवलोकनीयम्।

''जलसन्तरणमेतेषामतीव प्रमोदायाभवत्। वाराणसीक्षेत्रे परम-

---

१—संस्कृतसाहित्य का आलोचनात्मक इतिहास, डॉ० रामजी उपाध्यायः, प्रयागम् पृ० २५६।

२—शिवराजविजयम्, पं० अम्बिकादत्त व्यासः, वाराणसी, १९६९, पृ० ३०।

पवित्रभागीरथ्या विस्तीर्णप्रवाहो लोकमान्यैः सुखेनोत्तीर्ण इति बहुभिर्जनैः कथ्यते ।''[1]

लेखकः श्रीचितलेमहाशयो लोकमान्यतिलकस्य जन्मनः मृत्युपर्यन्तमैतिहासिकं सांगोपागं जीवनमस्यां कृतौ वस्तुतः चित्रीकर्तुं सफलोऽस्ति ।

द्वासुपर्णा

चरितप्रधानेष्वाख्यानात्मकगद्यग्रन्थेषु डॉ० रामजी उपाध्यायरचिता "द्वासुपर्णा" ग्राम्यजीवनाधारि-कृष्णसुदाम्नोः पौराणिकीं कथामभिनवरूपेण चित्रयति ।

श्रीनारायणशास्त्रिखिस्ते विरचिता विद्वच्चरितपंचकम्, आचार्यशेषशायीकृताष्टावक्रीयम्, भगवताचार्य–चारुदेवशास्त्रिप्रणीते गान्धीचरिते प्रभृतिगद्यकृतयो महात्त्वपूर्णा उल्लेखनीयाश्च सन्ति, यासु सरल-सरलं प्रसादात्मकं प्रवाहपूर्णं च संस्कृतं प्रयुक्तमस्ति ।

अनूदितं गद्यसाहित्यम्

भारतीयाभारतीय–भाषाभ्योऽनूदितं गद्यसाहित्यमपि समृद्धं विद्यते । विभिन्नभाषाभ्योऽधोलिखिता अनूदिताः कृतय उल्लेखनीयाः सन्ति ।

लावण्यमयी

श्रीनदप्पशास्त्री सुनृतवादिनीति संस्कृत–साप्ताहिके वंकिमचन्द्रस्य-लावण्यमय्या वंगलोपन्यासस्य सरलसंस्कृतेन रोचकं रूपान्तरणं कृतवान् ।

संसारचक्रम्—जुमञ्जुभाषिणी पत्रिकायाः सम्पादकः, रामानुजो हिन्द्या उपन्यासस्य संसारचक्रस्य सरलमनुवादं कृतवान् ।

अनूदितगद्यसाहित्ये श्रीशैलताताचार्येण संस्कृतरूपान्तरिते रचने वंगलोपन्यासदुर्गेशनन्दिनी क्षत्रियरमणी च, श्री हरिचरणरूपान्तरिता वँकिमचन्द्रस्योपन्यासकृतिः कपालकुण्डला, सोमयाज्यनूदिता टालस्टायकृतिः "कणः लुप्तः गृहं दहति" प्रभृतयः कृतयः महत्त्वपूर्णाः सन्ति ।

प्रकीर्ण—[ विविधविषयात्मकं ] गद्यसाहित्यम्—अर्वाचीनं प्रकीर्णं विविधविषयात्मकं गद्यसाहित्यमत्यन्तं समृद्धं वर्तते, यस्मिन् धार्मिकसामाजिक–सांस्कृतिकवैज्ञानिक–साहित्यिकयात्रावृत्तादि-विविधविषयका गद्यग्रन्था उपलभ्यन्ते । विधायामस्यामधोलिखिताः कृतय उल्लेखनीयाः सन्ति—

---

१—लोकमान्यतिलकचरितम्, चितले, सुबोध–संस्कृतलोकमान्यतिलकचरित–प्रकाशन, बम्बई ।

प्रबन्धमंजरी

पं० हृषीकेशभट्टाचार्योऽर्वाचीनसंस्कृतगद्यलेखकेषु सुप्रसिद्धोऽस्ति। प्रबन्धमञ्जरी तस्य महत्त्वपूर्णा रचनास्ति, प्रबन्धमञ्जर्याः प्रांजल-प्रवाह-पूर्णभाषाया उदाहरणं प्रस्तूयतेऽस्मिन् गद्यावतरणे—

"भीषणभस्मच्छुरितजूटघटित - सरस - कुसुमस्तवक -शोभिस्निग्ध धम्मिल्लशोभोद्भावितं भयंकराशीविषघटितार्ध—मौक्तिकसरसमुज्ज्वल-शोभाच्छादितावयवमर्धनारीश्वररूपं हि केवलं संस्कृतभाषायामेवाविर्भावित-मस्ति।"[१]

सेतुयात्रावर्णनम्

यात्रावृत्तसाहित्येऽत्यन्तं महत्त्वपूर्णमिदंगणपतिशास्त्रिणा पाण्डित्यपूर्णं सरलं यात्रावर्णनं" लिखितवान्।

श्रीशैलदीक्षितेन [तिरुमलाचार्येण] कावेरीगद्ये कुर्गप्रदेशीय-तलिकावेरीनाम्नः तीर्थस्य यात्रावर्णनं कृतम्।

श्रीकृष्णोपाध्यायप्रणोत-कवीन्द्रचन्द्रचन्द्रोदया गद्यग्रन्थ उत्तमकोटिको-ऽस्ति यस्मिन् शाहुजहाँकालिक-विदुषां प्रशस्तीनां संकलनमस्ति, याः कवीन्द्राचार्याय समर्पिता आसन्।

संस्कृतगद्येन इतिहास-लेखने म० म० पं० रामावतारशर्मा सुप्रसिद्धो-ऽस्ति। अस्यां विधायां स "भारतवर्णनम्" सरलललितसंस्कृतभाषया विरचितवान्।

श्रीद्विजेन्द्रनाथ[२]शास्त्री, हंसराजो[3] ऽग्रवालः, प्रभृतिभिः विद्वद्भिः संस्कृतसाहित्येतिहासग्रन्थाः सरससंस्कृतभाषया विरचिताः।

संस्कृतगद्यस्य नवीनविधायां समीक्षात्मकनिबन्धानां प्रणेतुः म० म० प० गिरधरशर्मणः महत्त्वपूर्णं स्थानं विद्यते। 'चतुर्वेदिसंस्कृतरचनावलिः' [भागद्वयं] वैदिकपौराणिकभाषाशास्त्रीयधर्मशास्त्रीयकाव्यशास्त्रीय-

---

८—प्रबन्धमञ्जरी, हृषीकेशभट्टाचार्यः, (संस्कृत-भाषाया वैशिष्ट्यम्) काव्यकुटीर-कार्यालयः चाँदपुर (बिजनौर) पृ० २०७।

९—संस्कृत साहित्य-विमर्शः, द्विजेन्द्रनाथः शास्त्री, १९५६ पृ० ६८०।

१०—संस्कृतसाहित्येतिहासः, (द्विभागात्मकः), हंसराज-अग्रवालः, फीरोजपुरम् १९५।

दार्शनिकादिविविधविषयकान् निबन्धान् सप्रस्तौति स्म। गीता-पुराण-समीक्षा तेन "पुराणपारिजाते" नाम्नि ग्रन्थे कृता।

अर्वाचीनसंस्कृतगद्यलेखेषु विविधविषयसम्बन्धिसंस्कृतनिबन्धकाराः प्रबन्धप्रकाशकारः डा० मंगलदेवशास्त्री, प्रस्तावतरंगिणीकारः पं० चारुदेवशास्त्री भारतस्य[1] सांस्कृतिकनिधिः, महाकविकालिदासः संस्कृतनिबन्धावलिः प्रभृतिग्रन्थानां कर्ता डॉ० रामजी उपाध्यायः, मानव शिल्पी[2] कालिदासादिग्रन्थानां रचयिता डॉ० रेवाप्रसाद द्विवेदी, निबन्धवैभवस्य लेखकः आचार्यकेशवदेवशुक्लः संस्कृतनिबन्धशतककारः डॉ० कपिलदेवद्विवेदी, संस्कृत-निबन्धाञ्जलिकारः डॉ० रामकृष्ण आचार्यः संस्कृतनिबन्धनवनीतकारः डॉ० पारसनाथद्विवेदी, संस्कृतनिबन्धादर्शकारः डॉ० राममूर्ति शर्मा, कालिदासीयम्-निबन्धनिचयकर्ता डॉ० कैलाशनाथ द्विवेदी, प्रबन्धरत्नाकरस्य रचयिता डा० रमेशचन्द्रः शुक्लः, डॉ० शिवप्रसादभारद्वाजः डा० वासुदेवकृष्णचतुर्वेदि-प्रभृत्यनेके संस्कृतगद्यलेखका उल्लेखनीयाः सन्ति।

आधुनिकसंस्कृतगद्यसाहित्यं संवर्धयन्त्यः संस्कृतपत्र-पत्रिका संलक्ष्यन्ते। अस्यां दिशि संस्कृतं भवितव्यम् [ नागपुर ] गाण्डीवम् [ वाराणसी ] सँगमनी [ प्रयागम् ], सागरिका [ सागरम् ], 'अजस्रा-[ लक्ष्मणपुरम् ] सारस्वती सुषमा [ वाराणसी ], संस्कृत-विमर्शः, संस्कृत प्रतिभा [दिल्ली] शारदा [ बम्बई ] गुरुकुलपत्रिका [ हरिद्वारम् ] दिव्यज्योतिः [ शिमला ] भारती-[ जयपुरम् ] प्रभृतिपत्रपत्रिकासु संस्कृतगद्यं समालोचनात्मकरूपेण समृद्धं संदृश्यते।

अर्वाचीनसंस्कृतगद्यसाहित्यस्य उपर्युक्तविवेचनेन कथयितुं शक्यते, यत् प्राचीनसंस्कृतगद्यकाव्यमिव अस्मिन्नलंकारवर्णनै जटिलता दुरूहता वा नावाप्यते, अपित्वस्मिन् सरलप्रसादपूर्णभाषया प्रवहमाणा कथा-कल्लोलिनी स्वाभाविकी समुल्लसति। ग्रीकगद्यकाव्यप्राचीनभारतीय-

---

१--ग्रन्थोऽयं उ० प्र० शासनेन पुरस्कृतः ( प्राप्तिस्थानम् सागरिका-समितिः सागरम् )

२--सागरिकासमितिः, सागरविश्ववि०, सागरम् ( कालिदासविशेषाङ्के सागरिकायां प्रकाशितम्।

गद्यकाव्यमिव अर्वाचीनसंस्कृतगद्यसाहित्येऽपि नगरवर्णनं, प्रकृति-चित्रणं, नारीसौन्दर्यवर्णनं पशुपक्षिपादपलतामयसंसारस्य रागविरागमय-व्यवहारस्य च चित्रणं दृश्यते। उभयोः साम्यमवलोक्य पीटर्सनमहोदयेन प्रोक्तम् "भारतीयगद्यकाव्यं ग्रीकगद्यकाव्यस्य अधमर्णमिति' वितथं निराधारम्प्रकल्पनम्।

प्राचीनगद्यस्य अपेक्षयार्वाचीनगद्ये विविधविधा विद्यन्ते, यासु प्राचीन-गद्यकवीनां मध्ये महाकवेः सुबन्धोर्न तादृशः प्रभावः परिलक्ष्यते, यादृशः दण्डिबाणयोः प्रभावः। बाणभट्टस्य प्रभावस्तु विश्वेश्वरपाण्डेय-कृष्णाचार्य-शैलदीक्षिताम्बिकादत्तव्यासादिलेखकानां गद्यसाहित्ये विद्यते एव।

संस्कृत-विभागाध्यक्षः

जनता स्नातकोत्तर महाविद्यालयः, अजीतमल इटावा उ० प्र०

१—संस्कृतसाहित्येतिहासः, (द्वितीयोभागः), हंसराज-अग्रवालः फीरोजपुरम् १९५१, पृ० १०।

# होलकरशासकानां संरक्षणे संस्कृतसाहित्यसंवर्धनम्

डॉ० ओम् जोशी

चतुस्त्रिंशदधिकसप्तदशशततमे खीष्टाब्दे प्रथमेन-बाजीरावपेशवामहाभागेन मल्हाररावनामको होलकरवंशीयो मालवप्रान्ताधिपतिः कुलपरम्परागतग्रामसमूहदानेन महतोत्सवेन च विधिवत्सम्मानितः। तस्माद्दत्ताग्रहारसमयान्मालवप्रदेशे होलकरराजवंशः शासकत्वेन प्रतिष्ठितः। अष्टादशशताब्द्याः प्रारम्भिकेष्वेव वर्षेषु मालवजनपदकृताधिकारा होलकरनरेशास्तदानीन्तनराजवंशेषु महत्त्वपूर्णेतिहासश्रृंखलारचयितारोऽभवन्।

एभिर्नरेशैर्भारतीयराजनीतिः प्रायः पञ्चाशदधिकद्विशतं वर्षाणि यावत् प्रभावितासीत्।

अष्टादशशताब्द्या उत्तरार्धे होलकरराजवंशस्य संरक्षणे या संस्कृतकाव्य-मंजरी विलसिता, सानिशं प्रवर्तते।१ प्रायशो वर्षशतद्वयेऽस्मिन्मालवप्रदेशे होलकरवंशसम्बद्धं यत्संस्कृतसाहित्यं विरचितं तदधस्तान्निर्दिष्टम्—

(१) अष्टादशशताब्द्या होलकरीयसंस्कृतसाहित्यम्।

(२) ऊनविंशशताब्द्या होलकरीय संस्कृत-साहित्यम्।

(३) विंशतिशताब्द्या होलकरीयसंस्कृतसाहित्यम्।

अष्टादशशताब्द्या होलकरीयसंस्कृतसाहित्यम्—

अहल्याकामधेनुनामायं धर्मशास्त्रग्रन्थो होलकरवंशमौलिभूषणाया देव्यहल्यायाः संरक्षणे तस्याः शासनकाले (१३ मार्च, १७६७ खीष्टाब्दतः ३० अगस्त १७९५ खीष्टाब्दं यावद्) विरचितः। ग्रन्थस्यास्य रचनाकारः केशवदास (केशवराय) उपनामकः खुशालीरामरायभट्टः।

अहल्याकामधेनौ मुख्यतया हिन्दूनां परम्पराः, विविधसंस्काराः, व्रतादयश्च वर्णिताः। ग्रन्थारम्भप्रशस्तिषु होलकरराजवंशेतिहासं ग्रन्थकृल्लिलेख।

अहल्याकामधेनोः प्रशस्तिश्लोकेषु निम्नाङ्कितानां जनानां विषये ऐतिहासिकतथ्यानाञ्च समावेशः कृतोऽस्ति—१) छत्रपतिसाहूभोंसले महोदयः, प्रथमपेशवाबाजीरावः, २) मालवजनपदाध्यक्षो मल्हारराव-

होलकरः, ४. तत्पत्नी गौतमी, ५. मल्हाररावपुत्रः खण्डेरावः, ६. मल्हाररावस्य मंत्री आनन्दरावः, ७. तद्भ्राता आपाजीरावः ८. तात्या गंगाधरः, ९. तत्पुत्रौ कुशमाधवौ, १०. गोविन्दपंतः, ११. गौतम्या मंत्री नाना ( नारुगणेशः ), १२. मल्हाररावस्नुषा खण्डेरावपत्नी च देव्यहल्या, १३. मालजीरावो, मालेरावो ( मालाजीरावः )।

कविना ग्रन्थस्य प्रशस्तिटीका च कृता। तत्र होलकरवंशसम्बद्धगद्य-मयेतिहासः सम्प्राप्तो भवति।

## विविधशिलालेखाः

"अष्टादशतमं भारतीयेतिहासस्याविलं शतकम्। होलकरवंशे-तिहासेऽपि महत्त्वमस्य वर्तते। तात्कालिकानामन्येषां राजवंशानामिव होलकरराजवंशेऽपि मालवजनपदस्य विविधक्षेत्रेष्वनस्यूत"—इत्येतत् तथ्यं होलकरवंशसम्बद्धाः शिलालेखप्रशस्तयः प्रमाणयन्ति। राज्ञां दानकर्म-निर्माणकार्यजीर्णोद्धाराणाञ्च वर्णनमेतेषु उपलब्धम्।

वस्तुतो होलकराणां कार्याधिकारक्षेत्रमिन्दूर–महेश्वर-देवास–खरगोण-देशपुरमण्डलेषु विततमासीत्। एते होलकरवंशविषयकाः संस्कृताभिलेखा विशिष्टकालावधावेव ( १७४० खीष्टाब्दतः १८९५ खीष्टाब्दं यावद् ) उत्कीर्णाः। कतिपय शिलालेखा गद्यमया, अपरे तु पद्यमयाः सन्ति। यथा–तिलभाण्डेश्वरशिलालेखः महाराष्ट्रियवास्तुशिल्पावबोधको मालवजन-पदाधिपतिनिर्मितशिवालयो त्कीर्णोऽष्टादशशताब्द्याः प्रथमोऽयं संस्कृत-शिलालेखस्तु प्रथमहोलकरनरेशस्य मल्हाररावस्य धर्मप्रवृत्ति द्योतयति।

मध्यप्रदेशराज्यस्य देवासनगरस्य समीपे "तराणा" नामा ग्रामो विद्यते। तत्र १७६७ प्रमोदनामके विक्रमसंवत्सरे, १६६२ शके, १७४० खीष्टाब्दे ज्येष्ठशुक्लस्य पञ्चम्यां तिथावुत्कीर्णेऽस्मिन्नभिलेखे तिलभाण्डे-श्वरनामकस्य शिवालयस्य निर्माणकर्म संसूचितमस्ति। निर्माणकार्यमेत-न्मालवपतिना मल्हाररावेण कारितम्। होलकरनरेशसम्बद्धेषु सर्वेषु संस्कृतशिलालेखेष्वयं प्राचीनतमो महत्त्वपूर्णश्च।

**वैद्यनाथमन्दिरशिलालेखः**

द्वादशलिङ्गेषु वैद्यनाथज्योतिर्लिङ्गमन्यतमम्। वैद्यनाथमन्दिरं तु

वर्तमान-महाराष्ट्रप्रदेशस्य परभणीमण्डलान्तर्गते परलीनामकस्थलेऽवस्थितमस्ति। १७८४ खीष्टाब्दे देव्यहल्या वैद्यनाथमन्दिरस्य जीर्णोद्धारं यथाविधि कारयामास। तत्कालमेव शिलालेखोऽयमुत्कीर्ण आसीत्।

संस्कृतशिलालेखेऽस्मिन् मालवमण्डलाधिपतेर्मल्हाररावस्य तत्पुत्रस्य खण्डेरावस्य, देव्यहल्यायाश्च नामानि टङ्कितानि सन्ति। शार्दूलविक्रीडितच्छन्दश्च प्रयुक्तम्।

## जामघाटद्वारशिलालेखः

होलकरवंशमौलिभूषणाया देव्यहल्यायाः शासनकाले विभिन्नेषु राज्येषु देवालयारामतडागकूपा निबद्धा आसन्। यतो ह्येषु निर्माणकर्मसु तस्यै सुतरां रुचिरासीत्।

इतोऽप्यतिरिक्ताः केचित् संस्कृतशिलालेखास्तस्या देव्याः सामरिकनीतिप्रत्यायकाः सन्ति। जामघाटद्वारशिलालेखस्तु होलकराणां युद्धनीतेरप्रतिम-मुदाहरणम्। श्रीमता होलकरोपाह्वेन प्रथमयशवंतरावेणास्य जामघाटद्वारस्य सामरिकोपयोगः कृतोऽनेकशोऽत्रेतिहास एव प्रमाणम्।

सप्तपङ्क्तियुतेऽस्मिन् संस्कृतशिलालेखे परम्परानुसारेण गणेशवन्दना वर्त्तते। अवशिष्टासु षट्सु पङ्क्तिषु विशिष्टप्रयोगोऽनुष्टुप्छन्दसः।

शिलालेखानुसारेण तस्य शोभनमार्गस्य निर्माणं १८४७ विक्रमे, १७१२ शके माघमासस्य त्रयोदश्यां तिथौ पूर्णतामगमत्। अत्रैव सङ्केतोऽयमेव वर्तते यद्देव्यहल्यासीत् शैवमतावलम्बिनी, ब्राह्मणानां परम्परागतस्य सनातनधर्मचय पालयित्री चेति।

श्रूयते यदस्मिन् जामघाटद्वारस्थले कश्चिद् गणपतरावनामाभिधानो महाराष्ट्रियब्राह्मणः प्रतिवसति स्म। स प्रतिदिनगमनागमनकारिभ्यो जनेभ्यः शुल्कं प्रतिगृह्णाति स्म। अनेन करग्रहणेन स धनी बभूव। एकदा स समग्रं धनं देव्यै अहल्यायै दातुमियेष, परं सा जनकार्यकर्त्री लोकहितप्रिया च निषेधपूर्वकं कथितवती गणपतरावनामानं तं ब्राह्मणं "यज्जनेभ्यः प्राप्तधनस्यास्योपयोगस्तेषामेव कल्याणकर्मसु कार्यः"। स गणपतरावः प्रत्यावृत्तः, परामर्शानुसारेण द्वारं निर्मितवान्।

काशीशिलालेख

संस्कृतसाहित्यस्य विविधेषु ग्रन्थेषु रमणीया काशीनगरी वर्णिता। अग्निपुराणेऽविमुक्तस्याष्टानां शिवालयानां यः स्पष्टोल्लेखः प्राप्यते[1], तत्रैकः काशीविश्वनाथोऽस्ति । देव्यहल्यायाः काशीशिलालेखोऽयं तत्पूतकर्मणां, धार्मिकवृत्तेस्तीर्थस्थानेषु भव्यकल्पनानाञ्च निदेशकः ।

पञ्चदशपंक्तिमयात् संस्कृताभिलेखाद् दिव्यचरिताया देव्यहल्यायाः पूतकार्याणां सिंहावलोकनं कर्तुं शक्यते । शिलालेखेऽस्मिन् होलकरराज-वंशसंस्थापकस्य मालवाधिपतेर्मल्हाररावस्य, तत्पत्न्या गौतमायाः, पुत्रस्य खण्डेरावस्य देव्यहल्यायाश्च नामोल्लेखेन समं तथा देव्या विनिर्मापितस्य बहुसोपानयुतस्य प्रघट्टकस्य गौतमेश्वराहल्योद्धारकेश्वरयोः शिवालययोश्च भव्यवर्णनं प्राप्यते । प्रघट्टनिर्माणकार्यमेतज्जीयाजीरावेण शिल्पकारेण १८४८ विक्रमाब्दे वैशाखशुक्लद्वितीयायां गुरुवासरे सम्पादितम् ।

वाराणस्यां देव्यहल्ययानुष्ठितानां विविध-दान-धर्म-निर्माण-कर्मणां वर्णनं महाकविसखारामविरचितेऽहल्याचरितेऽपि प्राप्यते । तद्यथा—

यज्ञान् विधेहि महतो जलदानशालां, देवालयं सुरुचिरं च नदीप्रघट्टम् ।
काशीगयाप्रमुखपावनतीर्थयात्रां दीनावनार्थममलं परमन्नसत्रम् ॥

पण्ढरपुरशिलालेखः

अयं संस्कृतशिलालेखो देव्यहल्यया निर्मापिते पण्ढरपुरस्थ-राममन्दिर-प्राङ्गणे सन्निधापितः । अत्र गद्यगुम्फिता नव पङ्क्तयो लसन्ति । तत्र देवी अहल्या इन्दूरपुराधीशः श्रीमान् महाराजतुकोजीरावश्चोल्लिखितौ । लेखोऽयं काशीनाथसुतेन टङ्कितः ।

## ऊनविंशशतकस्य होलकरीयं संस्कृतसाहित्यम्

अष्टादशशतके अहल्याकामधेनोर्धर्मग्रन्थस्य निर्माणानन्तरं होलकर-राजवंशाश्रये संस्कृतकाव्यरचनाप्रवाहोऽवरुद्ध इव, परन्तु कालेऽस्मिन् संस्कृतशिलालेखानां प्राचुर्यं विद्यते ।

ऊनविंशशतकस्योत्तरार्धे होलकरराजानां संरक्षणेऽसङ्ख्याताः साहित्यपारावारधुरीणाः पण्डिताः प्रशस्तिकाव्यानाममन्दां सुभगावगाहां जनानु-

१—अग्निपुराणम्—अध्यायसंख्या—११२।२—५ पद्यानि ।

रञ्जिनीं च धारां प्रवाहयाम्बभूवुः। अमूः प्रशस्तीर्विविधेषु वर्धापनोत्सव-राज्याभिषेकोपाधिधारण-जन्मोत्सव-पाणिग्रहणाद्यवसरेषु सुकवयः श्रावयन्ति स्म राजसभासु। तद्यथा—

## प्रशस्तयः

### महाराजतुकोजीरावप्रशस्तिः

गालवपुरनिवासी पण्डितः श्रीरामशास्त्री तैलङ्गः १८७८ तमे ख्रीष्टाब्दे मईमासे महाराजतुकोजीरावेण सङ्गतस्तत्प्रशस्तौ युग्मकं जुगुम्फ। तच्च 'मुन्तजिबाहादुरे' त्युपाधिधारणा श्री एम० डब्ल्यू० बर्वे–महाभागेन 'लाइफ ऑव हिज हायनेस महाराजा तुकोजीराव होलेकर ( द्वितीय )' इत्याख्ये स्वोपज्ञे प्रबन्धे प्रकाशितम्।

### प्रथममहाराजशिवाजीराव–होलकराभिषेकाभिन्दनम्

महाराज–शिवाजीराव–होलकरस्य राज्याभिषेकोत्सवे सनातन–धर्म-रक्षिण्या सभया संस्कृतगद्यमयमभिनन्दनपत्रमेकं महाराजाय समर्पितम्। संस्कृतगद्यमेतल्लिलेख १८८६ ख्रीष्टाब्दे पण्डितः सखारामशास्त्री सनातन-धर्मरक्षिणी–सभाया अध्यक्षः।

### प्रथममहाराजशिवाजीरावहोलकरराज्याभिषेक–प्रशस्तिः

चतुर्दशपद्यमयी प्रशस्तिरियं १९४३ विक्रमवत्सरे आषाढशुक्लद्वितीयायां शनिवासरे महाराज-शिवाजीराव–होलकरस्य राज्याभिषेकावसरे इन्दूर-नगरवासिना सृष्टिदासोपाह्वेन बालमुकुन्दत्रिवेदिना समर्पिता।

### शिलालेखाः

विगतशतक इवोनविंशशतकेऽपि होलकरैरुत्कारितानां शिलालेखानां बाहुल्यमस्ति। तत्र संस्कृतशिलालेखा यथा—

### महेश्वरशिलालेखः

१७६७ ख्रीष्टाब्देऽक्टूबरमासे पुण्यदर्शना देव्यहल्या महेश्वरं नाम नगरं होलकराणां राजधानीत्वेनोदघोषयत्। नगरमेतन्नर्मदानदीतटाधिष्ठितम्। 'माहिष्मती' त्यस्य पुरातनं नाम। अत्र देवी अहल्या बहून् देवालयान् निर्मापितवती, पुरातनमन्दिराणां च जीर्णोद्धारमकारयत्। प्रथममहाराज-यशवन्तरावस्य मनोरथमनुचिन्त्य तद्भार्या होलकरवंशावतंसा कृष्णादेवी

मातुरहल्यायाः स्मृतावेकस्य सुशोभितच्छत्रस्य बहुमन्दिराणां च निर्माणं कारितवती। अद्यापि तत्र जगन्मातुरहल्याया मणिशिलानिर्मिता प्रतिमा लसति। होलकर-वंश-मौलिभूषणायाः कीर्तिप्रशस्तिरहल्येश्वरमन्दिरस्य प्रवेशद्वारस्य दक्षिणभागे निधापितेऽभिलेखे प्राप्यते। १८९० खीष्टाब्दे संस्थापितोऽयं लेखः षोडश–संस्कृत–पद्यसंवलिताभिः सप्तत्रिंशत्पंक्तिभिः संवृतः। अत्र संस्कृतभाषाया ओजस्विता दर्शनीया। तथाहि—

अस्तिक्षमारक्षणदक्षिणानां विपक्षपक्षक्षपणाक्षमाणाम्।
श्रीशौर्यगाम्भीर्य–गुणैक–धाम्नां वंशः क्षितौ होलकरोपनाम्नाम्॥

नाथद्वाराक्षेत्रस्याहल्याकुण्डशिलालेखः

उत्तरभारतस्य यात्रावसरे द्वितीय–महाराजतुकोजीरावो नाथद्वाराक्षेत्रं जगाम। तत्र स जगन्मात्रा अहल्यया निर्मापितं शीर्णतां यातं च कुण्डमेकं ददर्श। तद् दृष्ट्वासौ कुण्डस्य पुनरुद्धारमचीकरत्, तत्समीपं च देव्याः पुण्य-स्मृतौ यशवन्तेश्वराख्यं मन्दिरं रचयामास। निर्माणकार्यमेतच्चैत्रशुक्ल–पौर्णमास्यां रविवासरे १९१३ विक्रमाब्दे पूर्णतामगच्छत्। तत्रोपलब्धे द्वात्रिंशत्पंक्तियुतेऽस्मिन्नभिलेखे प्रायेण व्यवहृता संस्कृतभाषा। आदौ गणेशवन्दना, ततः श्रीनाथस्मरणं तदनु क्रमशः होलकर-वंशसंस्थापकस्य मल्हाररावस्य देव्या अहल्यायाः प्रथम–यशवन्त-रावस्य देव्या अहल्यायाः प्रथम–यशवन्तरावस्य तुकोजीरावस्य चोल्लेखः कृतः। अभिलेखान्ते पंक्तिचतुष्टयं हिन्दीभाषायामस्ति। प्रशस्तिरियं शास्त्रिगङ्गाधरसुतेन कन्हैयालालशर्मणा लिखिता, शिरोषा-शिवलालेन च टंकिता।

देपालपुरशिलालेखः

इन्दूरनगरस्योपमण्डलं देपालपुरम्। अस्य व्यवहारमण्डपे १९३२ वैक्रमाब्दे कार्तिकशुक्लसप्तम्यामुत्कीर्णोऽयं शिलालेखः। अस्य मुद्रणम् इन्दूरनगरस्थ केन्द्रीयसङ्ग्रहालये सुरक्षितम्। अभिलेखेऽस्मिन् संस्कृताङ्ग्लो-दूर्भाषाः प्रयुक्ताः। एतदनुशीलनेन विज्ञायते यद् देपालपुरे महाराजतुकोजी-रावे शासति मण्डलाधिपतिः श्रीलालजी–अम्बाजीः १९२५ तमे विक्रमाब्दे तडागे बन्धनिर्माणंसमारब्धवान्। बन्धोऽयं सप्तभिर्वर्षैः निर्मितः। निखिले कर्माणि क्रमशः ५७९२१ रूप्यकाणि व्ययीभूतानि।

# सागरिका—लेखानुक्रमणिका

## प्रथमवर्षतो विंशवर्षपर्यन्तम्

## प्रथमं वर्षम्

| निबन्धः | लेखकः |
| --- | --- |
| महाभारतीयं तपः | कु. शशिबाला श्रीवास्तवः |
| लीलामयलीली | श्री महावीर प्रसाद जोशी |
| शाक्तदृष्टया सृष्टितत्त्वविमर्शः | " गोपीनाथ कविराजः |
| विश्वशान्तेरुपायः | " योगेशः |
| मन्दमारुतपञ्चकम् | " मा. कृष्ण नम्पूतिरिपादः |
| स्फोटसमाम्नायः | " रसिकविहारी जोशी |
| नाटकीयमितिवृत्तम् | " विश्वनाथ भट्टाचार्यः |
| सागरिका-संवर्धनम् | " बटुकनाथ शास्त्री खिस्ते |
| संस्कृतपत्रकारिता | " रामगोपाल मिश्रः |
| महाभारते नारी | श्रीमती वनमाला भवालकर |
| वलिपुष्टविलसितम् | " के. राजन्न शास्त्री |
| कथासरित्सागरे विज्ञानस्वरूपम् | " ओ३म्प्रकाश हर्ष |
| गीतामञ्जरी | भेषराज सापकोट शास्त्री |
| संस्कृतशोधकर्मपरिचयः | |
| ग्रन्थसमालोचनम्, संस्कृतवृत्तम् | विश्वनाथ भट्टाचार्यः |

## वर्षं द्वितीयम्

| | |
| --- | --- |
| आधुनिकशिक्षानीतिः | डा. रामजी उपाध्यायः |
| राजेन्द्रस्य युद्धोद्योगः | श्री भोजराजः |
| सांख्यानां साक्षी | " शिवचन्द्र भट्टाचार्यः |
| गीतम् | दिनेशः |
| सरस्वती | कु. शशिबाला श्रीवास्तवः |
| नवावतारिका | तेलकपल्ले विश्वनाथ शर्मा |
| महाभारतीयतीर्थयात्रा-विश्लेषणम् | कु. अर्चना वसुः |
| नाटकीयं वृत्तप्रपञ्चनम् | डा. विश्वनाथ भट्टाचार्यः |
| सद्गुरुस्तवनम् | ,, वनमाला भवालकरः |
| संस्कृतपत्रकारिता | श्री रामगोपाल मिश्रः |
| पद्मावती | ड़ा. वासुदेव विष्णु मिणी |
| भारतं तद्विराजताम् | ,, मंगलदेव शास्त्री |
| अग्निसंहिता | श्री जगन्नाथ वेदालङ्कार |
| काव्ये रसपर्याप्तिविमर्शः | डा. राममूर्ति त्रिपाठी |

## वर्षं तृतीयम्

| निबन्धः | लेखकः |
| --- | --- |
| सर्वतन्त्रस्वतन्त्रकवितार्किकचक्रवर्ती | डा. राममूर्ति त्रिपाठी |
| संस्कृतपत्रकारिता | ,, रामगोपाल मिश्रः |
| शोकाञ्जलिः | श्री गुण्डेराव हर्कारे |
| कालिदासः | स्व. म. म. रामावतार शर्मा |
| भवभूतेर्नाटकेषु कालप्रियनाथः | म. म. डा. वा. वि. मिराशी |
| रघुवंशसञ्जीवनी | डा. रेवाप्रसाद द्विवेदी |
| साहित्यरत्नाकरस्थःपद्यविमर्शः | पं. के. राजन्न शास्त्री |
| निबन्धको रामावतार शर्मा | झा अच्युतानन्द शर्मा |
| सप्तदशशतकस्य कतिपयरूपकाणि | श्री शंकरलाल स्वर्णकारः |
| श्रीराम. व. वेलणकरः | ,, आर. डी. लड्डू |
| खजुराहो मन्दिरेष्वप्सरोमूर्तयः | ,, बिहारीलालः नागार्चः |
| सागरविश्वविद्यालये संस्कृतशोधकर्म | ,, श्री भूपति भट्टः |
| राजतरंगिणी | डा. रामजी उपाध्यायः |
| कुन्तकस्य वक्रोक्तिप्रस्थानं व्यञ्जना | ,, रविशंकर नागरः |
| कारणत्वं स्वभाववादश्च | श्री शिवचन्द्र भट्टाचार्यः |
| भारतीयसंस्कृतेर्वैशिष्ट्यानि | डा. रामजी उपाध्यायः |
| कर्णपूरस्याप्रस्तुतविधानपाटवम् | श्री गौतमप्रसाद मिश्रः |
| सप्तदशशतकस्य रूपकत्रयम् | ,, शंकरलालः स्वर्णकारः |
| अष्टादशशतकस्य त्रयो भाणाः | ,, बिहारीलालः नागार्चः |
| ऊनविंशशतकस्य नाटकत्रयम् | ,, शिवदर्शन तिवारी |
| विंशशताब्द्याः नाटकेषु राष्ट्रजागरणम् | ,, गुलाबचन्द्र जैनः |
| वसन्तवर्णनम् | पुल्लेल श्री रामचन्द्रडुः |
| काव्येष्वलङ्कारः | श्री भूपतिभट्टः |
| प्राच्ययूरोपीयविश्वविद्यालये संस्कृताध्ययनम् | डा. रसिकबिहारी जोशी |
| कालिदाससमयनिर्णयः | म. म. डा. वा. वि. मिराशी |
| तिलकमञ्जरीकारो महाकविर्धनपालः | डा हरिन्द्रभूषण जैनः |
| संस्कृतपत्रकारिता | ,, रामगोपाल मिश्रः |
| महाभारतयुद्धे नारी | ,, श्रीमती वनमाला भवालकरः |
| नाट्यस्वरूपपरामर्शः | ,, विश्वनाथ भट्टाचार्यः |
| कार्तवीतपोरहस्यम् | श्री रेवाप्रसाद द्विवेदी |

| निबन्धः | लेखकः |
|---|---|
| भारतस्यैतिह्यम्, अभ्युदयः, संस्कृतविद्या च | डा. विश्वनाथो भट्टाचार्यः |
| मेघदूतस्यैकं पद्यम् | ,, रेवाप्रसादो द्विवेदी |
| व्यञ्जनाविषये भट्टनायकमतसमीक्षा | ,, रविशङ्करो नागरः |
| अभिनवराधव-नाटकम् | पं. शिवदर्शन तिवारी |
| गंगासागरीयम् | श्रीमती निर्मला उपाध्यायः |
| यतीन्द्रविमल-चतुर्धुरीणस्य कृतित्वम् | सुश्री मनोरमा सक्सेना |

## वर्ष पञ्चम्

| | |
|---|---|
| वैदिककालीनं शिल्पम् | डा. रामजी उपाध्यायः |
| कालिदासीयं नाट्यजगत् | ,, विश्वनाथ भट्टाचार्यः |
| मदालसाचम्पूकर्ता त्रिविक्रमभट्टः | म. म. डा. वा. मिराशी |
| ऋग्वैदिकचरित्रनिर्माणम् | डा. रामजी उपाध्यायः |
| कालिदास-भारती | ,, रेवाप्रसाद द्विवेदी |
| अलङ्कारप्राधान्यवादिनां ध्वनि–विरोधस्तत्खण्डनञ्च | ,, रविशंकर नागरः |
| स्वातन्त्र्योत्तर-संस्कृत साहित्यम् | श्रीमती निर्मलोपाध्यायः |
| धर्मविजयनाटकम् | शंकरलाल स्वर्णकारः |
| अष्टादशशतकस्य प्रहसनद्वयम् | बिहारीलाल नागार्चः |
| ऊनविंशशतकस्य गीतकाव्यम् | कु. कृष्णा खरे |
| कण्टकाञ्जलिः | ,, माया तिवारी |
| राजशेखरस्यावन्तिप्राकृतम् | डा. भास्कराचार्य त्रिपाठी |
| व्यञ्जनायाः स्वरूपं विकासश्च | ,, रविशंकर नागरः |
| कविकलानिधि-श्रीकृष्णभट्टः तस्य सुन्दरीस्तवराजश्च | ,, प्रभाकर शास्त्री |
| आदर्शदम्पती उपन्यासिका | पुष्करदत्त शर्मा |
| ऊनविंशशताब्द्या एकाङ्करूपकाणि | शिवदर्शन तिवारी |
| मेलनतीर्थ–भारतम् | कु. मनोरमा सक्सेना |
| भारतीयसंस्कृतिदर्शनम् | डा. रामजी उपाध्यायः |
| कालिदास–भारती | ,, रेवाप्रसाद द्विवेदी |

| निबन्धः | लेखकः |
|---|---|
| अष्टदशशतकस्य तिस्रो वीथ्यः | बिहारीलाल नागार्च |
| ऊनविंशशतकस्य रूपकाष्टकम् | शिवदर्शन तिवारी |
| रणेन्द्रनाथगुप्तस्य हरिश्चन्द्रचरितम् | गुलाबचन्द्र जैनः |
| अमरमीरम् | कु. मनोरमा सक्सेना |
| राजवैद्य श्रीकृष्णरामभट्टः तस्य कृतयश्च | डा. प्रभाकर शास्त्री |
| वसुमती-चित्रसेनीयम् | शंकरलाल स्वर्णकारः |
| जागरणम् | श्रीमती मायापाठकः |
| कामस्य रसरूपेण प्रथमः समुल्लासः | रमाशंकर जैतली |
| तैत्तिरीयसंहिता ५।५।१।१-२ मन्त्रस्य विनियोगः | डा. कृष्णलालः |
| कालिदास-भारती | ,, रेवाप्रसाद द्विवेदी |
| यायावरविप्रो राजशेखरः | ,, भास्कराचार्य त्रिपाठी |
| कालिदासस्य भौगोलिकविज्ञानम् | श्री रामचन्द्रुडुः |
| भारत-जनकम् | कु. मनोरमा सक्सेना |
| अश्रु-विसर्जनम् | स्व. म. म. यादवेश्वरस्तर्करत्नः |

## षष्ठं वर्षम्

| | |
|---|---|
| विदेशेषु संस्कृताध्ययनम् | डा. रसिकविहारी जोशी |
| कलचुरिकविर्मायुराजः | ,, वा. वि. मिराशी |
| अलङ्कारसर्वस्वे संशोधनम् | ,, रेवाप्रसाद द्विवेदी |
| अभिनेयं बालरामायणम् | डा. भास्कराचार्य त्रिपाठी |
| मेघदूतीयं पद्यम् | श्री शिवचन्द्र भट्टाचार्यः |
| रामनाथः तस्य आर्यालहरी विलापलहरी च | डा. रामजी उपाध्यायः |
| पर्वणोकरा नारायणभट्टाः तेषां कृतित्वञ्च | ,, प्रभाकर शास्त्री |
| धर्मसूरिः तस्य साहित्यरत्नाकरश्च | श्री के. राजन्न शास्त्री |
| चित्रकाव्येषु गतिचित्राणां विकासपरम्परा | डा. रुद्रदेव त्रिपाठी |
| मेधाव्रतशास्त्री तस्य प्रकृतिसौन्दर्यञ्च | कु. माया परहंस |

| निबन्धः | लेखकः |
|---|---|
| शाब्दी व्यञ्जना | डा. रविशंकर नागरः |
| मेघदूते तिथिनिश्चयः | ,, रेवाप्रसाद द्विवेदी |
| कर्मकर्तृ मीमांसा | श्री विश्वनाथ मिश्रः |
| संस्कृतं भारतीयराष्ट्रियता च | डा. रामजी उपाध्यायः |
| मदनकविः तस्य पारिजातमञ्जरी च | ,, हरीन्द्रभूषण जैनः |
| व्रजनाथो भट्टः तस्य पद्यतरंगिणी च | ,, प्रभाकर शास्त्री |
| या स्रष्टिः सृष्टुराद्या | ,, मुकुन्दमाधव शर्मा |
| यतीन्द्रस्यानुसन्धानप्रवृत्तयः | ,, मनोरमा सक्सेना |
| श्रीकृष्णलालः तस्य शिञ्जारवश्च | श्रीमती माया पाठकः |
| सदाशिवकवेर्गीतिकाव्यानि | कु. कृष्णा खरे |
| गीतगोविन्दस्य वैशिष्टचानि | श्री गोपीकृष्ण द्विवेदी |
| श्रीपण्डितराजराजेश्वरशास्त्रिणः | के. एस. सुन्दरेश्वरन |
| महाभारतानुसारं ब्रह्मचर्येण चरित्रनिर्माणम् | श्रीमती दिनेशः |
| अनूपसिंहस्तस्य संस्कृतसंवर्धनञ्च | डा. रामजी उपाध्यायः |
| कालिदास-भारती | ,, रेवाप्रसाद द्विवेदी |
| उद्दाण्डिकवेर्मल्लिकामारुतम् | डा. वा. वि. मिराशी |
| काव्यगौरवे कालिदासकाव्यम् | ,, विश्वनाथ भट्टाचार्यः |
| जयपुरी-शतक-काव्य-परम्परा | ,, प्रभाकर शास्त्री |
| अष्टादशशतकीय-केरलप्रदेशीय-नाटकत्रयम् | श्री विहारीलाल नागार्चः |
| कालिदासकाव्येषु कलायाः प्रकृतिप्रभावौ | डा. कु. मिनति चक्रवर्ती |
| कर्णकपूरः तस्य चैतन्यचन्द्रोदयं नाटकञ्च | श्री गणेश प्रसाद मिश्रः |
| मुक्तकप्रबन्धगतरसचर्वणम् | डा. राममूर्ति त्रिपाठी |
| सभेदार्या सप्पशती | ,, प्रभाकर शास्त्री |
| गाङ्ट्टोश्शोरिकृष्णनम्पूतिरिपादः | भोजराजः |
| संस्कृतसाहित्ये श्लेषमूलकपरिसंख्या | श्री महेन्द्रप्रताप थापरः |
| यक्षगानम्—संस्कृतभाषायां तेलुगुनाटचप्रयोगः | डा. सीताराम दांतरे |

## दशमम् वर्षम्

| निबन्धः | लेखकः |
|---|---|
| स्वप्नवासवदत्तावेणीसंहारयोरङ्गि-रसविमर्शः | ,, रामजी उपाध्यायः |
| व्यञ्जनाविषये महिमभट्टमतसमीक्षा | ,, रविशंकरनागरः |
| काशिकासिद्धान्तकौमुद्योर्वेदवचनानि | श्री महेशदत्त शर्मा |
| प्रत्यक्षतत्त्वविमर्शः | ,, कीर्त्यानन्द झा |
| पण्डितराजकृता उत्प्रेक्षाभेदाः | डा. रेवाप्रसाद द्विवेदी |
| बाणभट्टस्य केचन दोषाः | ,, अमरनाथ पाण्डेयः |
| सीताचरिते कालिदासप्रतिच्छविः | श्री रहसविहारी द्विवेदी |
| श्रीदत्तदिनेशचन्द्रस्य जीवन कृतित्वं च | डा. राधावल्लभ त्रिपाठी |
| भाषा-विवेचनम | ,, गजानन शास्त्री |
| कुमारसम्भवनायिकाविमर्शः | ,, कृष्णा दासः |
| शोभाकरमित्रस्य नवीना अलङ्काराः | श्री विहारी लाल शर्मा |
| शाकुन्तले कालिसासस्य व्यक्तित्त्वम् | ब्रह्ममित्रः अवस्थी |
| आख्यातपदलक्षम् | श्री जगदीश चतुर्वेदी |
| श्रवणमनननिदिध्यासनानां विधिविमर्शः | ,, केशवप्रसाद पाठक |
| नञर्थविमर्शः | ,, हरिश्चन्द्रमणि त्रिपाठी |
| रामायणे असामञ्जस्यम् | डा. राधावल्लभ त्रिपाठी |
| पुराणवाङ्मये गुरुः | ,, महेशचन्द्र जोशी |
| श्रुतिहृदयम् | डा. गजानन शास्त्री |
| संस्कृतवर्णमालायाः स्वरूपमायामाश्च | ,, गङ्गाराम पाण्डेयः |
| रघुनाथाभ्युदयकाव्यम् | ,, सीताराम दांतरे |
| संशयविषये न्यायभाष्यवार्तिक-विचाराः | ,, श्रीनारायणमिश्रः |
| जीवपरिमाणविचारः | श्री उमेशचन्द्र पाण्डेयः |
| योगदर्शने कर्मबादः | कु. विमला कर्णाटकः |
| अर्थान्तरसंक्रमितवाच्यध्वनिविमर्शः | श्री नवरङ्ग चतुर्वेदी |
| जैनसंस्कृतसाहित्ये राजनीतिः | ,, पन्नालाल जैनः |

| निबन्धः | लेखकः |
|---|---|
| अद्वैतवेदान्ते श्रवणमनननिदिध्यासनानां स्वरूपम् | ,, केशवप्रसाद पाठकः |
| अलङ्कारनिरूपणे सर्वस्वरत्नाकरयोर्मतभेदः | ,, विहारीलाल शर्मा |
| छायानाटकम् | डॉ. रामजी उपाध्यायः |
| महाकविहरिश्चन्द्रस्य धर्मशर्माभ्युदयम् | ,, पन्नालालः |
| पद्यद्वयमीमांसा | ,, सुदर्शन शर्मा |
| मेघदूतेऽभिव्यक्तिदोषाः | डॉ. रेवाप्रसाद द्विवेदी |
| कालिदासस्य काव्ये राष्ट्रियभावना सांस्कृतिकचेतना च | ,, कैलासनाथ ,, |
| भारतीयदर्शनानि तेषाभाविर्भावक्रमश्च | म. म. गिरधर शर्मा चतुर्वेदी |
| भवभूतिनाटकेषु कालप्रियनाथः | ,, ,, डॉ. वा. वि. मिराशी |
| मध्यप्रदेशीयसंस्कृतसाहित्यसंवर्धनम् | डॉ. श्रीमती वनमाला भावलकर |
| आचार्यरामचन्द्रशुक्लानां रसविमर्शविवेकः | ,, बच्चूलालः अवस्थीं |
| वाल्मीकेर्गोत्रं स्वभावः समयश्च | ,, पुरुषोत्तलाल भार्गवः |
| भगवतो बुद्धस्य चत्वारि आर्यसत्यानि | डा. विमला कर्णाटकः |
| अक्षरविवेचने ऋकारऌकारौ | श्री विश्वनाथ मिश्रः |
| आधुनिके युगे तर्कशास्त्रस्य परमोपयोगिता | डॉ. गजाननशास्त्री मुसलगाँवकरः |
| अपभ्रंश-भाषा | ,, देवेन्द्रकुमार शास्त्री |
| रसगङ्गाधरे रत्नाकरस्य सन्दर्भाः | विहारीलाल शर्मा |
| कालिदासस्योपमा बिम्बश्च | अयोध्याप्रसाद द्विवेदी |
| सागरविश्वविद्यालये संस्कृतसेवा | डा. रामजी उपाध्यायः |

## एकादशवर्षम्

| | |
|---|---|
| उपमोत्प्रेक्षाकलकलः | श्री केदार नाथ ओझा |

| निबन्ध: | लेखक: |
|---|---|
| रूपके दृश्यसूच्यानुसन्धानम | डॉ. रामजी उपाध्याय: |
| इस्लामधर्मानुयायिनां संस्कृतसेवा | " श्रीमती वनमाला भवालकर: |
| संस्कृतरूपकेषु एकोक्ति: | " रामजी उपाध्याय: |
| श्रीमहेश्वरानन्दस्वामिनां स्तोत्राणि | " कामेश्वर मिश्र: |
| आनन्दवर्धनमते भावचित्र्या: स्वरूपम् | " जानकी प्रसाद द्विवेद: |
| प्रकाश्यमाना: संस्कृतपत्रिका | य, कृष्णशर्मा |
| संस्कृत साहित्येऽभिनवोन्मेष: | श्री राधावल्लभ त्रिपाठी |
| लौकिकसंस्कृतस्य प्राकृततत्वम | डॉ. देवेन्द्रकुमार शास्त्री |
| बौद्धवैष्णवयोर्भक्तिसाम्यम् | श्री जगन्नाथ उपाध्याय: |
| छलितरामस्य कृत्यारावणस्य च नाम्नी | डॉ. रामजी " |
| कालिदासस्य चान्द्रविम्बा: | प्रा. अयोध्याप्रसाद द्विवेदी |
| काव्ये लक्षणा | श्री शिवदत्त चतुर्वेद: |
| श्रुतिसर्वस्वं रघुवंशम् | डॉ. अमरनाथ पाण्डेय: |
| काव्यबोधेऽनुकृतवाद: | " बच्चूलाल: अवस्थी |
| सुधीसुधानिधे रुक्मिणीहरणम् | प्रा. रहसविहारी द्विवेदी |
| संस्कृतोच्चारणे दोषा गुणाश्च | डॉ. गङ्गाराम पाण्डेय: |
| वेणीसंहारनाटकस्य नायक: | " रमाशङ्कर त्रिपाठी |
| भाषाया: प्रयोजनं रूपञ्च | " श्री नारायण मिश्र: |
| अर्कसोमयाजी | श्री जयप्रसाद वार्ष्णेय: |
| भासनाटकेषु समुदाचार: | सुश्री गायत्री देव: |
| योगशास्त्रविषये किञ्चिन्निवेदनम् | कु. विमला कर्णाटक: |
| अप्राप्त-संस्कृतरूपकाणि | डॉ. रामजी उपाध्याय: |
| राजशेखरवर्णितो विवाहविधि: | " राधावल्लभ: त्रिपाठी |
| लौकिकच्छन्दसु: वैदिकच्छन्दसां प्रभाव: | " पारसनाथ द्विवेदी |
| पुराण-समीक्षा | श्रीमती कमला पाण्डेय: |

| निबन्धः | लेखकः |
|---|---|
| स्फोटप्रकाशः | श्री चन्द्रभानु त्रिपाठी |
| इन्दुमतीस्वयंवरप्रसङ्ग विश्लेषम् | डॉ. अमरनाथ पाण्डेयः |
| मीमांसादर्शने मोक्षः | " गजाननशास्त्री |
| सङ्गीतं काव्यञ्च | " सुभद्रा चौधरी |
| चार्वाकसिद्धान्ताः | " विमला कर्णाटकः |
| लोके संज्ञानां व्यवहारः | जानकीप्रसाद द्विवेदः |
| पण्डितराजश्रीसोमनाथशर्मा | श्री डिल्लीरामः तिमसिनिया |
| आन्ध्रभाषायां संस्कृतभाषायाः प्रभावः | कालूरि हनुमन्तरावः |
| काव्यसंस्तवः | श्री रहसबिहारी द्विवेदी |
| शोधनवनीतम् | डॉ. राधावल्लभः त्रिपाठी |
| काशी सागरिकामभिनन्दति | |
| कवौ रसं स्वदते न वा | डॉ. रेवाप्रसाद द्विवेदी |
| काव्यीया दुरूहता | " जनार्दन उपाध्यायः |
| रसनिष्पत्तेः शास्त्रीयं विवेचनम् | " विमला कर्णाटकः |
| श्रीमदमरसिंहप्रणीतं नामलिङ्गनुशासनम् | डॉ. गजाननशास्त्री मुसलगाँवकर |
| ऊनविंशशतकस्य संस्कृत-महाकाव्यानि | श्री कन्हैया पाण्डेयः |
| प्रकाश्यमानाः संस्कृतपत्रिकाः | य. कृष्ण शर्मा |
| प्राचीननगरी कालपी | डॉ. कैलासनाथ द्विवेदी |
| व्याकरणदर्शने आख्यातार्थमीमांसा | श्री केशवप्रसाद पाठकः |
| साहित्यशास्त्रे गुणतत्त्वविमर्शः | डॉ. रविशङ्करनागरः |
| रत्नावलीपद्यविवक्षा | " सुदर्शन शर्मा |
| संस्कृतमहाकवीनां काव्यतत्त्वदर्शनम् | " राधावल्लभ त्रिपाठी |

## द्वादशवर्षम्

| | |
|---|---|
| महाकविः कालिदासः | डॉ. रामजी उपाध्यायः |
| मानवशिल्पी महाकविः | " रेवाप्रसाद द्विवेदी |
| कालिदाससाहित्ये ध्वनिसौन्दर्यम् | " रविशङ्करनागरः |

## त्रयोदश वर्षम्

| निबन्धः | लेखकः |
|---|---|
| अस्मदीयम् | डॉ० रामजी उपाध्याय. |
| सांख्यसिद्धान्ते कैवल्यस्वरूपम् | ,, अमलधारी सिंहः |
| | सुश्री राजमाथुरः |
| पालिसाहित्य प्रसङ्गः | श्रीशिपशङ्कर त्रिपाठी |
| रामायणे कण्ठतोऽपि कृतं महाकाव्यतत्त्वम् | रहसविहारी द्विवेदी |
| भारतीयकाव्यतत्त्वम् | शेषाचल शर्मा |
| काव्ये व्यक्तित्वस्य प्रश्नः | डॉ. जनार्दन उपाध्यायः |
| भरतातिक्रमः | ,, रामजी ,, |
| विश्वस्मिन् | श्रीबालशास्त्री |
| अश्वपदबन्धेन श्लोकद्वयम् | स्व. पं. रामप्रतापशास्त्रिमहाभागाः |
| शब्दशक्तिमूलवस्तुध्वनिविमर्शः | वायुनन्दनपाण्डेयः |
| मनोदर्शनम् | डॉ. गजाननशास्त्रिमुसलगाँवकरः |
| जीवस्य क्रमिकविकासः | श्रीकृष्णमणि त्रिपाठी |
| शब्दसाधुत्वे शिष्टप्रामाण्यम् | मिथिलेश चतुर्वेदी |
| किरातार्जुनीये प्रतिमुखसन्ध्यङ्ग-निरूपणम् | सुषमाकुलश्रेष्ठा |
| प्रस्तावना-मीमांसा | डॉ. रामजी उपाध्यायः |
| धर्मः संस्कृतिश्च श्रेयोमूलम् | पं. रामप्रतोप शास्त्रिणः |
| रसस्य दार्शनिकभूमिका | विश्वनाथ मिश्रः |
| कारुण्यं कालिदासस्य | डॉ. राधावल्लभ त्रिपाठी |
| आयुर्वेदसारः | प्रियव्रत शर्मा |
| व्यञ्जनाविषये राजशेखरः | रेवाप्रसाद द्विवेदी |
| शाब्दबोधः | श्री सीतारामशास्त्री |
| जैनदर्शने प्रमाणविचारः | गोकुलचन्द्रो जैनः |
| बौद्धदर्शनस्य मूलसिद्धान्ताः | उदयचन्द्रो जैनः |

| निबन्धः | लेखकः |
|---|---|
| चिमनीचरित्रस्य ऐतिहासिकता | डॉ. प्रभाकरशास्त्री |
| प्रादि-प्रसादः | आजादमिश्रः |
| अभिधावृत्तिविचारः | डॅा. रविशङ्करनागरः |
| योगदर्शने परिणामवादः | कु. विमला कर्णाटकः |
| कातन्त्रव्याकरणे चर्करीत ( यङ्लुक् ) प्रयोगाविचारः | डॉ. जानकी प्रसाद द्विवेदी |
| शाकुन्तलीयं पद्यमेकम् | ,, राधावल्लभः त्रिपाठी |
| महाभारतीयानि तीर्थानि | श्री इन्द्रमोहनसिंहः |
| संस्कृतनाट्यं नृत्यञ्च | सुश्री अनूपा देवी |
| अष्टादशशतकस्यसंस्कृतरूपकाणि | श्रीरविनन्दनत्रिपाठी |
| भाषाभैज्ञानिकगुरुः महर्षियास्कः | डॉ. गजाननशास्त्री मुसलगाँवकर |
| मुक्तितत्त्वविमर्शः | सुधांशुशेखर ,, |
| वेदानां सामवेदोऽस्मि | परड्डी मल्लिकार्जुनः |
| प्राकृते नाटचभर्चा नट्धातुश्च | कपिलदेवगिरिः |
| कामिनीषु कालीदासस्य कोमलानुरागः | आचार्य रमाशङ्करो मिश्रः |
| श्रुतिस्मृत्यनेकान्तवादः | डॉ. हर्षनारायणः |
| कालीदासवर्णित-शक्रावतारत्ति शचीतीर्थस्थितिनिर्धारणम् | डॉ. कैलासनाथ द्विवेदी |
| शुद्धाद्वैतवेदान्ते प्रमेयपदार्थविचारः | ,, श्रीमती राधारानी सुखवाला |
| श्रीविद्याधरचक्रवर्ती | ,, प्रभाकर शास्त्री |
| कुट्टनीमते रत्नावल्याः प्रथमाङ्कस्य रङ्गप्रयोगः | ,, राधावल्लभः त्रिपाठी |

| निबन्धः | लेखकः |
|---|---|

## पञ्चदशवर्षम्

| | |
|---|---|
| संस्कृत साहित्ये-व्यायोगपरम्परा | आचार्यो रविनन्दनत्रिपाठी |
| सिद्धान्तसम्राट् ( ज्योतिषविशेषाङ्कः ) | सम्पादक : डॉ. मुरलीधर चतुर्वेदः |
| कालिदासीयरूपकेषु वस्तुविभागः | रेवाप्रसाद द्विवेदी |
| कालिदासभारती | ,, |
| षोडशशतकस्य संस्कृत-नाट्यसाहित्यम् | रविनन्दन त्रिपाठी |
| कालिदासीयम | कैलाशनाथ द्विवेदी |
| अर्थप्रकृति-विमर्शः | रामजी उपाध्यायः |
| अस्माकं शोधयात्रा | रविनन्दन त्रिपाठी |
| कालिदासकृतिषु सीमान्त-विदेशिराज्यानामुल्लेखः | कैलाशनाथ द्विवेदी |
| कालिदासीयो द्वचभिधयोः समीकरणम् | |
| संस्कृतसाहित्ये व्यायोगपरम्परा | रविनन्दन त्रिपाठी |
| कविकुलगुरोर्वाणीविलासः | गजाननशास्त्रिमुसलगरॉवकः |
| अन्नदाचरणस्य कृतित्वम् | डॉ. राधावल्लभ त्रिपाठी |
| सस्कृतवृत्तम् | ,, ,, ,, |
| कालिदास रूपकेषु नान्दिश्लोकाः | कु. कुसुम भूरिया. |
| मेघदूते नगरी-चित्रम् | विश्वनाथ मुखोपाध्याय |
| पञ्चीकरण-प्रकारः | |
| सप्तदशशतकस्य संस्कृत-रूपकाणि | डा. रविनन्दन त्रिपाठी |
| प्राप्तोपाधिकाः शोधनिबन्धाः | |
| सागरिकालेखानुक्रमणिका ( प्रथम वर्षतो पञ्चदशवर्षपर्यन्तम् ) | । |

## षोडशवर्षम्

| | |
|---|---|
| विमलनाटिकं संस्कृतनाटकम् | डॉ० रामजी उपाध्यायः |

| निबन्धः | लेखकः |
| --- | --- |
| कालिदाससाहित्ये योगविद्या | रेवाप्रसाद द्विवेदी |
| वैदिकसंहितासु हंसशब्दः | डा० रामनाथ वेदालङ्कार |
| कालिदासभवभूत्योः काव्यबिबानुप्रेक्षा | डा० बुद्धदेवशर्मा वेदाचार्यः |
| अविश्रमोऽयं लोकतन्त्राधिकारः | अयोध्या प्रसाद द्विवेदी |
| भासस्य बिम्बनविधिः | अयोध्या प्रसाद द्विवेदी |
| ग्रन्थालोचनम् | |
| गोमेधः | डॉ० श्रीकृष्ण देवः |
| काशीस्था श्रौतयज्ञपरम्परा | डॉ० श्रीकृष्णदेवः |
| कालिदासस्य जीवनदर्शनम् | डॉ० धर्मेन्द्रकुमार गुप्तः |
| सौन्दरनन्दकाव्ये विश्वप्रेमतत्त्वम् | दी वि श्रीनिवासदीक्षितः |
| प्रातिपदिकं प्रातिपदिकार्थंश्च | सत्यप्रकाश शर्मा |
| ऐतिहासिक-महाकाव्येषु शिक्षा-प्रणाली | डॉ० रामदत्त शर्मा |
| कालिदासकृतिषु नगरवर्णनम् | डॉ० कैलाशनाथ द्विवेदी |
| संस्कृत-वृत्तम् | डॉ० राधावल्लभः त्रिपाठी |
| प्राप्तिसम्भव-विमर्शः | डा० रामजी उपाध्यायः |
| कालिदासीय-नाट्यविधानम् | डॉ० राधावल्लभः त्रिपाठी |
| पुष्पपत्तने प्राच्य-परिषद्यभिभाषणम् | डा० रामजी उपाध्याय |
| वैशेषिकनये तमसो विवेचनम् | डॉ० सत्यनारायणमिश्रः |
| नृसिंहसांख्यदर्शनम् | डॉ० रामानन्दशास्त्री |
| काव्येऽलोकसामान्यत्वम् | राममूर्ति त्रिपाठी |
| हमामतेर्मोक्षमूलरस्य वेदप्रवृत्तिः | रामकृष्णशास्त्री 'अव्ययः' |
| वैदिकं काव्यबिम्बम् | डॉ० अयोध्याप्रसाद द्विवेदी |
| चन्दनमुनिप्रणीतमार्जुनमालाकारम् | डा० सत्यव्रतः |
| चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् | डा० अयोध्याप्रसाद द्विवेदी |

## ऊनविंशंवर्षम्

## बिशवर्षम

| निबन्धः | लेखकः |
|---|---|
| सप्तदशशताब्दे संस्कृतमहाकाव्यानि | रामलखन पाण्डेय |
| भट्ट श्रीमथुरानाथशास्त्रिणो व्यक्तित्वं कृतित्वं च | विन्ध्येश्वरीप्रसाद मिश्रः |
| सूत्रपूर्व न्यायशास्त्रम् न्यायसूत्रकारश्च | कु० नवलता |
| अभिज्ञान शाकुन्तलस्य नाट्यशास्त्रीयमनुशीलनम् | रामजी उपाध्यायः |
| डाँ. वेङ्कटरामराघवस्योपलब्धयः | आशा सरवटे |
| भाणेऽभिनयो लास्याङ्गानि च | रामजी उपाध्यायः |
| विशाखदत्तस्य अर्थशास्त्रोपजीव्यत्वम् | सनत्कुमारः |
| रसविषये कुन्तकः | परमानन्द मिश्रः |
| ग्रन्थ समीक्षणम् | |
| नायकविमर्शः | रामजी उपाध्यायः |
| सप्तदशशताब्दस्य संस्कृतमहाकाव्यानि | श्री रामलखन पाण्डेयः |
| दुष्यन्तो धीरोदात्तो धीरललितो वा | रामजी उपाध्यायः |
| आचार्यमहावीरप्रसादद्विवेदिनः संस्कृतकवित्वम् | राधावल्लभः त्रिपाठी |
| उत्तररामचरितस्य प्रस्तावना-वैशिष्टचम् | श्री ओमप्रकाश राजपाली |
| राजकर्माभिचार–प्रकरणम् | किशोर मिश्रः |
| रूपकेषुप्रस्तावनायाः प्रयोजनम् | श्री ओमप्रकाश राजपाली |
| संज्ञाव्यवहारस्य प्रयोजनानि | जानकीप्रसाद द्विवेदी |
| अङ्गनायकाः | रामजी उपाध्यायः |
| स्वरविवेचनम् | युगल किशोर मिश्रः |
| संस्कृत-रूपकेषु सूत्रधारः | श्री ओमप्रकाश राजपाली |
| संस्कृत-वृत्तम् | श्री क्षेत्रवासी पण्डा |
| ग्रन्थसमीक्षणम् | राधा वल्लभः त्रिपाठी |
| भारतीय-ज्योतिषम् | राजमोहनः उपाध्यायः |
| पण्डिराज-विभावनम् | कैलासपतिः त्रिपाठी |

# सागरिका-लेखानुक्रमणिका

## ● डा० रामजी उपाध्यायेन रचितानि सम्पादितानि च    मूल्यम्

१. संस्कृत साहित्य का आलोचनात्मक इतिहास ( प्रथमो भागः ) रु० १२.००
२. संस्कृत साहित्य का आलोचनात्मक इतिहास प्राचीन नाटक ( द्वितीयो भागः ) रु० १०.००
३. मध्यकालीन संस्कृत नाटक, पृ० सं० ५२० रु० ५०.००
४. आधुनिक संस्कृत नाटक—भागद्वयं, पृ० १३५० रु० ६०.००
५. Sanskrit & Prakrit Mahākāvyas (D. Phil Thesis) रु० ५०,००
६. महाकविः कालिदासः ( संस्कृतम् ) पृ० सं० १६० रु० २०.००
७. भारतस्य सांस्कृतिकनिधिः ( संस्कृतम् ) पृ० सं० ४११ रु० २५.००
८ दशरूपक-तत्त्वदर्शनम् पृ० २०० छात्र संस्करण १५.०० पुस्तककालयीन रु० २५.००
९ दशरूपक—नान्दी-भाषाटीकासहितं सावलोकम् रु० १४.००
१०. मध्यकालिकः संस्कृतनाटकालोकः रु० २५.००
११. नाट्यशास्त्रीय-पारिभाषिकशब्दानुक्रमणिका रु० १५.००
१२. नाट्यशास्त्रीय-प्रयोगविज्ञानम् रु० २५.००
१३. महाभारतीय-संस्कृतिकोश रु० ३०.००

## ● डा० वनमाला भुवालकर-रचितानि

१. महाभारत में नारी—( हिन्दी ) शोधप्रबन्धः पृ० सं० ५२५ रु० ४०.००
२. पाददण्डम् रूपकम् ( संस्कृतम् ) रु० २.००
३. रामवनगमनम् संगीतिका ( संस्कृतम् ) रु० १.००
४. पार्वतीपरमेश्वरीयम् ( संस्कृतम् ) संगीतिका रु० १.५०
५. पंचमहाकाव्येषु चन्द्रः ( निबन्धः ) ( संस्कृतम् ) रु० १.००

## ● डा० राधावल्लभ त्रिपाठी-विरचितानि

१. संस्कृत कवियों के व्यक्तित्व का विकास पी० एच० डी० शोधग्रन्थः रु० २५.००
२. वाल्मीकि-विमर्शः रु० १०.००
३. मुकुन्दविलासम् (सम्पादित) रु० १५.००
४. नाट्यमण्डपम् रु० १०.००

## ● प्रकीर्णानि

१. श्रीहर्ष के रूपक डा० गोकुल प्रसाद त्रिपाठी रु० ४०.००
२ सुसंहतभारतम्—( नाटकम् ) पुल्लेलरामचन्द्रः रु० ८.००
३. साहित्यसन्दर्भाः—डा० रेवाप्रसाद द्विवेदी रु० ३.००
४. रसार्णवसुधाकरः—सिंहभूपालः, सम्पादक डा० रेवाप्रसाद द्विवेदी रु० ८.००

**प्राप्तिस्थानम् : संस्कृत-परिषद् विश्वविद्यालय, सागर**